क्याक्रभोज्यमिति हि ब्राह्मणम् ॥ २८ ॥

एकखुरोष्ट्रगवयग्रामसूकरशरभगवाम् ॥ २९ ॥

धेन्वनडुहोर्भक्ष्यम् ॥ ३० ॥

मेध्यमानडुहमिति वाजसनेयकम् ॥ ३१ ॥

कुक्कुटो विकिराणाम् ॥ ३२ ॥

प्लवः प्रतुदाम् ॥ ३३ ॥

क्रव्यादः ॥ ३४ ॥

हँसभासचक्रवाकसुपर्णाश्च ॥ ३५ ॥

क्रुञ्चक्रौञ्च वार्ध्राणसलक्ष्मणवर्जम् ॥ ३६ ॥

पञ्चनखानां गोधाकच्छपश्वाविट्छल्यकखड्गशशपूतिखषवर्जम् ॥ ३७ ॥

अभक्ष्यश्चेटो मत्स्यानाम् ॥ ३८ ॥

सर्पशीर्षी मृदुरः क्रव्यादो ये चान्ये विकृता यथा मनुष्यशिरसः ॥ ३९ ॥ १७ ॥

॥ इत्यापस्तम्बीयधर्मसूत्रे प्रथमे प्रश्ने पञ्चमः पटलः समाप्तः ॥

१. ६. १८.

मध्वामं मार्गं माँसं भूमिर्मूलफलानि रक्षा गव्यूतिर्निवेशनं युग्यघासश्चोग्रतः प्रतिग्राह्याणि ॥ १ ॥

---

I. v, 17, 30. कारणाद्भक्ष्यम् N. U. in the Text, and the Commentary कारणमष्टकादिविधिः It is taken from the Hiraṇyakes'i S.

I. v, 17, 31. मेध्यं मांसमा°...... वाजसनेयिकम् N. U.

I. v, 17, 35. हंससारसचक्रवाक N. U.

I. v, 17, 36. वाध्रीणस Md. कुरुंच. Md. Regarding °क्रौञ्च see the Com.

I. v, 17, 37. श्वाविट्शल्यक is the better reading, according to Haradatta, but against the MSS. श्वाविट्शल्य. Md.

I. v, 17, 39. सर्पशीर्षा. P. U., Text and Com.; N. U.; N. मृदरः P. U.; मुदरः N. U.

I. vi, 18, 1. प्रतिगृह्याणि Md. मार्गमांसं N. U.

एतान्यपि नानन्तेवास्याहृतानीति हारीतः ॥ २ ॥
आमं वा गृण्हीरन्कृतान्नस्य वा विरसस्य ॥ ३ ॥
न सुभिक्षाः स्युः ॥ ४ ॥
स्वयमप्यवृत्तौ ॥ ५ ॥
सुवर्णं दत्त्वा ॥ ६ ॥
पशुं वा भुञ्जीत ॥ ७ ॥
नात्यन्तमन्ववस्येद्वृत्तिं प्राप्य विरमेत् ॥ ८ ॥
त्रयाणां वर्णानां क्षत्रियप्रभृतीनाँ समावृत्तेन न भोक्तव्यम् ॥९॥
प्रकृत्या ब्राह्मणस्य भोक्तव्यं कारणादभोज्यम् ॥ १० ॥
यत्राप्रायश्चित्तं कर्मसेवते प्रायश्चित्तवति ॥ ११ ॥
चरितनिर्वेशस्य भोक्तव्यम् ॥ १२ ॥
सर्ववर्णानाँ स्वधर्मे वर्तमानानां भोक्तव्यँ शूद्रवर्जमित्येके॥१३॥
तस्यापि धर्मोपनतस्य ॥ १४ ॥
सुवर्णं दत्त्वा पशुं वा भुञ्जीत नात्यन्तमन्ववस्येद्वृत्तिं प्राप्य विरमेत् ॥ १५ ॥
संघान्नमभोज्यम् ॥ १६ ॥
परिक्रुष्टं च ॥ १७ ॥
सर्वेषां च शिल्पाजीवानाम् ॥ १८ ॥

---

I. vi. 18, 3. P. U. begins a new Sútra with कृतान्नस्य; प्रतिगृण्हीरन्. Md.
I. vi, 18, 5. P. U. joins this Sútra with the following two.
I. vi, 18, 8. P. U. divides the Sútra into two, beginning the second with वृत्तिम्.
I. vi, 18, 11. यत्र प्राय° N. U.
I. vi, 18, 12. °निर्वेषस्य N.; P.; Md.
I. vi, 18, 13. वर्तमानानां च Md.
I. vi, 18, 16. संघान्नं न P. U.
I. vi, 18, 17. च सर्वेषाम् N. U.
I. vi, 18, 18. च om. P. U. °जीविनाम् P. U.

ये च शस्त्रमाजीवन्ति ॥ १९ ॥

ये चाधिम् ॥ २० ॥

भिषक् ॥ २१ ॥

वार्धुषिकः ॥ २२ ॥

दीक्षितोऽक्रीतराजकः ॥ २३ ॥

अग्नीषोमीयसंस्थायामेव ॥ २४ ॥

हुतायां वा वपायां दीक्षितस्य भोक्तव्यम् ॥ २५ ॥

यज्ञार्थे वा निर्दिष्टे शेषाद्भुञ्जीरन्निति हि ब्राह्मणम् ॥ २६ ॥

क्लीबः ॥ २७ ॥

राज्ञां प्रैषकरः ॥ २८ ॥

अहविर्याजी ॥ २९ ॥

चारी ॥ ३० ॥

अविधिना च प्रव्रजितः ॥ ३१ ॥

यश्चाग्नीनपास्यति ॥ ३२ ॥

यश्च सर्वान्वर्जयते सर्वान्नी च श्रोत्रियो निराकृतिर्वृषलीपतिः ॥ ३३ ॥ १८ ॥

१. ६. १९.

मत्त उन्मत्तो बद्धोणिकः प्रत्युपविष्टो यश्च प्रत्युपवेशयते तावन्तं कालम् ॥ १ ॥

क आश्यान्नः ॥ २ ॥

---

I. vi, 18, 19. शास्त्रेण P. U.

I. vi, 18, 26. हि om. all except Md. वा om. N. U.

I. vi, 18, 28. प्रैषको P. pr. m.; N. ; P. U. text.

I. vi, 18, 31. प्रव्रजिताः P. U.; प्रव्रजतो Md.

I. vi, 18, 32. N. U. om. this Sútra.

I. vi, 18, 33. वर्जयेत्स° Md.

I. vi, 19, 1. बद्धणिकः Md. प्रत्युपवेशयीत Md.

य ईप्सेदिति कण्वः ॥ ३ ॥

पुण्य इति कौत्सः ॥ ४ ॥

यः कश्चन दद्यादिति वार्ष्यायणिः ॥ ५ ॥

यदि हि रजः स्थावरं पुरुषे भोक्तव्यम्। अथ चेच्चलं दानेन निर्दोषो भवति ॥ ६ ॥

शुद्धा भिक्षा भोक्तव्यैककुणिकौ काण्वकुत्सौ तथा पुष्करसादिः ॥ ७ ॥

सर्वतोपेतं वार्ष्यायणीयम् ॥ ८ ॥

पुण्यस्येप्सतो भोक्तव्यम् ॥ ९ ॥

पुण्यस्याप्यनीप्सतो न भोक्तव्यम् ॥ १० ॥

यतः कुतश्चाभ्युद्यतं भोक्तव्यम् ॥ ११ ॥

नानियोगपूर्वमिति हारीतः ॥ १२ ॥

अथ पुराणे श्लोकावुदाहरन्ति ॥ १३ ॥

उद्यतामाहृतां भिक्षां पुरस्तादप्रवेदिताम् ।
भोज्यां मेने प्रजापतिरपि दुष्कृतकारिणः ॥
न तस्य पितरोऽश्नन्ति दश वर्षाणि पञ्च च ।
न च हव्यं वहत्यग्निर्यस्तामभ्यवमन्यत इति ॥ १४ ॥

चिकित्सकस्य मृगयोः शल्यकृन्तस्य पाशिनः ।

---

I. vi, 19, 3. इच्छेत् P. pr. m.

I. vi, 19, 5. कश्चित् P. U.; Md.; N.; N. U. text.

I. vi, 19, 6. रजस्थावरं P. U.; N. U.; P.; N. यदि ह Md.; P. sec. m.

I. vi, 19, 11. अभ्युदितं Md. अभ्युदंतं N. U.

I. vi, 19, 12. नाननुयोगं Md.; N. U.

I. vi. 19, 13. श्लोकान् N. U.

I. vi, 19, 14. अप्रचोदितां N. U. अभ्यधिमन्यते Md. च om. N. After this Sútra N. U., P. U., and Md. insert another verse :—

श्रद्धापूतं तु भोक्तव्यं चोरस्यापि विशेषतः ।
न त्वेव बहुयाज्यस्य यश्चोपनयते बहूनिति ॥

श्रद्धापूतस्य Md. But the Commentary neither gives any comment on it, nor refers to it with a single word.

कुलटायाः षण्ढकस्य च तेषामन्नमनाद्यम् ॥ १५ ॥
अथाप्युदाहरन्ति ।
अन्नादे भ्रूणहा मार्ष्टि अनेना अभिशँसति ।
स्तेनः प्रमुक्तो राजनि याचन्ननृतसंकरइति ॥ १६ ॥ १९ ॥

॥ इत्यापस्तम्बीयधर्मसूत्रे प्रथमे प्रश्ने षष्ठः पटलः ॥

नेमं लौकिकमर्थं पुरस्कृत्य धर्मांश्चरेत् ॥ १ ॥
निष्फला ह्यभ्युदये भवन्ति ॥ २ ॥
तद्यथाम्रे फलार्थे निमित्ते छाया गन्ध इत्यनूत्पद्यन्ते ।
एवं धर्ममपि चर्यमाणमर्था अनूत्पद्यन्ते ॥ ३ ॥
नो चेदनूत्पद्यन्ते न धर्महानिर्भवति ॥ ४ ॥

---

I. vi, 19, 16. In this Sútra we have a great confusion. Md., P. U., Text, P., read with slight variations :—

अन्नादे भ्रूणहा मार्ष्टि पत्यौ भार्यापचारिणी । गुरौ शिष्यश्च याज्यश्चार्त्विक्षु स्तेनो राजनि ॥
[राजनिति Md.] [राजनिकिल्बिषम् P. U.]

स्तेनः प्रमुक्तो राजनि अनेना अभिशंसति । याचन्ननृतसंकर इति ॥

N. U. text apparently has had the same reading, but it has been mixed partly with the Commentary.

The reading of our Text is that of N. and of the Hiranyakes'in's, who, however, have the modern form °संगरे for संकरे.

The reasons why I prefer the reading of N. are—

(1) Because N. U. comments on our Text only, and P. U. gives first the Commentary on our Text, and after that a Commentary on पत्यौ भार्या &c., whence it appears, that the latter part of the Commentary is a later addition;

(2) Because Haradatta, according to both N. U. and P. U., states distinctly, that स्तेनः प्रमुक्तो राजनि is the *third páda* of the verse, which it can only be, if our reading is adopted.

(3) Because the fuller reading mentions the king's guilt twice.

The interpolation seems, however, to be old, as such different redactions of the Sútra as Md. and P. have it.

I. vii, 20, 3. अर्थादयो N. U.

I. vii, 20, 4. नोचेदनूत्पद्यन्ते om. Md.

अनसूयुर्दुष्प्रलम्भः स्यात्कुहकशठनास्तिकबालवादेषु ॥ ५ ॥

न धर्माधर्मौ चरत आवँ स्व इति । न देवगन्धर्वा न पितर इत्याचक्षतेयं धर्मोयमधर्म इति ॥ ६ ॥

यं त्वार्याः क्रियमाणं प्रशँसन्ति स धर्मो यं गर्हन्ते सोधर्मः॥ ७॥

सर्वजनपदेष्वेकान्तसमाहितमार्याणां वृत्तँ सम्यग्विनीतानां वृद्धानामात्मवतामलोलुपानामदाम्भिकानां वृत्तसादृश्यं भजेत ॥८॥

एवमुभौ लोकावभिजयति ॥ ९ ॥

अविहिता ब्राह्मणस्य बणिज्या ॥ १० ॥

आपदि व्यवहरेत पण्यानामपण्यानि व्युदस्यन् ॥ ११ ॥

मनुष्यान्रसान्रागान्गन्धानन्नं चर्म गवां वशाँ श्लेष्मोदके तोक्मकिण्वे पिप्पलिमरीचे धान्यं माँसमायुधँ सुकृताशां च॥१२॥

तिलतण्डुलाँस्त्वेव धान्यस्य विशेषेण न विक्रीणीयात् ॥ १३॥

अविहितश्चैतेषां मिथो विनिमयः ॥ १४ ॥

अन्नेन चान्नस्य मनुष्याणां च मनुष्यै रसानां च रसैर्गन्धानां च गन्धैर्विद्यया च विद्यानाम् ॥ १५ ॥

अक्रीतपण्यैर्व्यवहरेत ॥ १६ ॥ २० ॥

१. ७. २१.

मुञ्जबल्वजैर्मूलफलैः ॥ १ ॥

तृणकाष्ठैरविकृतैः ॥ २ ॥

नात्यन्तमन्ववस्येत् ॥ ३ ॥

वृत्तिं प्राप्य विरमेत् ॥ ४ ॥

---

I. vii, 20, 5. दुष्प्रलम्भस्यात् P.

I. vii, 20, 7. यत्त्वार्याः P. sec. m., Md. यद्गर्हन्ते Md.

I. vii, 20, 8. आर्याणां वृत्तं स्वधर्मनिरतानां सम्यग्वि° N. U.

I. vii, 20, 12. गवा वसाः N. U; पिप्पली P. U.; N. U.; N. मरिचे P. U.; Md. आयुधान् Md.

I. vii, 20, 16. व्यवहरेत् N.

I. vii, 21, 4. P. U. joins this Sútra to the preceding.

न पतितैः संव्यवहारो विद्यते ॥ ५ ॥

तथापपात्रैः ॥ ६ ॥

अथ पतनीयानि ॥ ७ ॥

स्तेयमाभिशस्यं पुरुषवधो ब्रह्मोज्झं गर्भशातनं मातुः पितुरिति योनिसंबन्धे सहापत्ये स्त्रीगमनं सुरापानमसंयोगसंयोगः॥८॥

गुर्वीसखिं गुरुसखिं च गत्वान्यांश्च परतल्पान् ॥ ९ ॥

नागुरुतल्पे पततीत्येके ॥ १० ॥

अधर्माणां तु सततमाचारः ॥ ११ ॥

अथाशुचिकराणि ॥ १२ ॥

शूद्रगमनमार्यस्त्रीणाम् ॥ १३ ॥

प्रतिषिद्धानां मांसभक्षणम् ॥ १४ ॥

शुनो मनुष्यस्य कुक्कुटसूकराणां ग्राम्याणां क्रव्यादसाम् ॥१५॥

मनुष्याणां मूत्रपुरीषप्राशनम् ॥ १६ ॥

शूद्रोच्छिष्टमपपात्रागमनं चार्याणाम् ॥ १७ ॥

एतान्यपि पतनीयानीत्येके ॥ १८ ॥

अतोन्यानि दोषवन्त्यशुचिकराणि भवन्ति। दोषं बुद्ध्वा न पूर्वः परेभ्यः पतितस्य समाख्याने स्याद्वर्जयेत्त्वेनं धर्मेषु ॥१९॥२१॥

॥ इत्यापस्तम्बीयधर्मसूत्रे प्रथमे प्रश्ने सप्तमः पटलः ॥

अध्यात्मिकान्योगाननुतिष्ठेन्न्यायसँहितानानैश्चारिकान् ॥ १ ॥

---

I. vii, 21, 6. अथ Md.

I. vii, 21, 9. °सखीं both times Md.; P.U. गुर्वीसखीं N., but see the Com.

I. vii, 21, 14. प्रतिषिद्धानां च Md.

I. vii, 21, 16. मनुष्याणां च Md.

I. vii. 21, 19. P.U. begins a new Sútra with दोषं.

I. viii. 22, 1. आध्यात्मिकान्यो° Md.; P. sec. m.; but see the Com. °सहितान् P.U.

आत्मलाभान्न परं विद्यते ॥ २ ॥
तत्रात्मलाभीयाञ्श्लोकानुदाहरिष्यामः ॥ ३ ॥
पूः प्राणिनः सर्व एव गुहाशयस्य ।
अहन्यमानस्य विकल्मषस्य ।
अचलं चलनिकेतं येनुतिष्ठन्ति तेमृताः ॥ ४ ॥
यदिदमिदि हेदि ह लोके विषयमुच्यते ।
विधूय कविरेतदनुतिष्ठेद्गुहाशयम् ॥ ५ ॥
आत्मन्नेवाहमलब्ध्वैतद्धितं सेवस्व नाहितम् ।
अथान्येषु प्रतीच्छामि साधुष्ठानमनपेक्षया ।
महान्तं तेजस्कायँ सर्वत्र निहितं प्रभुम् ॥ ६ ॥
सर्वभूतेषु यो नित्यो विपश्चिदमृतो ध्रुवः ।
अनङ्गोशब्दोशरीरोस्पर्शश्च महाञ्छुचिः ।
स सर्वं परमा काष्ठा स वैषुवतँ स वै वैभाजनं पुरम् ॥ ७ ॥
तं योनुतिष्ठेत्सर्वत्र प्राध्वं चास्य सदाचरेत् ।
दुर्दर्शं निपुणं युक्तो यः पश्येत्स मोदेत विष्टप इति ॥८॥२२॥

१. ८. २३.

आत्मन्पश्यन्सर्वभूतानि न मुह्येच्चिन्तयन्कविः ।
आत्मानं चैव सर्वत्र यः पश्येत्स वै ब्रह्मा नाकपृष्ठे विराजति॥१॥
निपुणोणीयान्बिसोर्णाया यः सर्वमावृत्य तिष्ठति ।
वर्षीयाँश्च पृथिव्या ध्रुवः सर्वमारभ्य तिष्ठति ॥

---

I. viii, 22, 5. उच्यतेवधूय P.
I. viii, 22, 6. अलब्ध्वैतत् P. U.; text N.
I. viii, 22, 7. वै om. P. U. वैषुवंतं P. U. Text and Com.
I. viii, 22, 8. इति om. Md.; P. U.; N.

स इन्द्रियैर्जगतोस्य ज्ञानादन्योनन्यस्य ज्ञेयात्परमेष्ठी विभाजः ।
तस्मात्कायाः प्रभवन्ति सर्वे स मूलं शाश्वतिकः स नित्यः॥२॥
दोषाणां तु निर्घातो योगमूल इह जीविते ।
निर्हृत्य भूतदाहीयान्क्षेमं गच्छति पण्डितः ॥ ३ ॥
अथ भूतदाहीयान्दोषानुदाहरिष्यामः ॥ ४ ॥
क्रोधो हर्षो रोषो लोभो मोहो दम्भो द्रोहो मृषोद्यमत्याशपरीवादावसूया काममन्यू अनात्म्यमयोगस्तेषां योगमूलो निर्घातः ॥ ५ ॥
अक्रोधोहर्षोरोषोलोभोमोहोदम्भोद्रोहः सत्यवचनमनत्याशोपैशुनमनसूया संविभागस्त्याग आर्जवं मार्दवं शमो दमः सर्वभूतैरविरोधो योग आर्यमानृशंस्यं तुष्टिरिति सर्वाश्रमाणां समयपदानि तान्यनुतिष्ठन्विधिना सार्वगामी भवति॥ ६ ॥ २३ ॥

॥ इत्यापस्तम्बीयधर्मसूत्रे प्रथमे प्रश्नेष्टमः पटलः ॥

क्षत्रियं हत्वा गवां सहस्रं वैरयातनार्थं दद्यात् ॥ १ ॥
शतं वैश्ये ॥ २ ॥
दश शूद्रे ॥ ३ ॥
ऋषभश्चात्राधिकः सर्वत्र प्रायश्चित्तार्थः ॥ ४ ॥
स्त्रीषु चैतेषामेवम् ॥ ५ ॥
पूर्वयोर्वर्णयोर्वेदाध्यायं हत्वा सवनगतं वाभिशस्तः ॥ ६ ॥

---

I. viii, 23, 2. Line *b*, आवृत्य Md.; Line *c*, अन्योन्यस्य N.; Line *d*, नित्यः कः Md.

I. viii, 23, 3. भूतदाहादीन् N. U. text; भूतदाहान् P. sec. man. Md.; N. om. all from निर्हृत्य.

I. viii, 23, 5. आनात्म्यं Md.

I. viii, 23, 6. आनृशँसं N. U. आनृशसं आनृशंस्यं P. U. Com.

I. ix, 24, 4. प्रायश्चित्तार्थं P.; N.

ब्राह्मणमात्रं च ॥ ७ ॥

गर्भं च तस्याविज्ञातम् ॥ ८ ॥

आत्रेयीं च स्त्रियम् ॥ ९ ॥

तस्य निर्वेशः ॥ १० ॥

अरण्ये कुटिं कृत्वा वाग्यतः शवशिरध्वजोर्धशाणीपक्षमधोना-भ्युपरिजान्वाच्छाद्य ॥ ११ ॥

तस्य पन्था अन्तरा वर्त्मनी ॥ १२ ॥

दृष्ट्वा चान्यमुत्क्रामेत् ॥ १३ ॥

खण्डेन लोहितकेन शरावेण ग्रामे प्रतिष्ठेत ॥ १४ ॥

कोभिशस्ताय भिक्षामिति सप्तागाराणि चरेत् ॥ १५ ॥

सा वृत्तिः ॥ १६ ॥

अलब्धोपवासः ॥ १७ ॥

गाश्च रक्षेत् ॥ १८ ॥

तासां निष्क्रमणप्रवेशने द्वितीयो ग्रामेऽर्थः ॥ १९ ॥

द्वादश वर्षाणि चरित्वा सिद्धः सद्भिः संप्रयोगः ॥ २० ॥

आजिपथे वा कुटिं कृत्वा ब्राह्मणगव्योपजिगीषमाणो वसेत् । त्रिः प्रतिराद्धोपजित्य वा मुक्तः ॥ २१ ॥

आश्वमेधिकं वावभृथमवेत्य मुच्यते ॥ २२ ॥

धर्मार्थसंनिपातेऽर्थग्राहिण एतदेव ॥ २३ ॥

---

I. ix, 24, 10. निर्वेषः P.; P. U.; N.; Md.

I. ix, 24, 11. कुटीं N. U.; शवशिरोध्वजो Md. But see Notes to the Translation.

I. ix, 24, 13. वान्यमु° N. U.; P.U.

I. ix, 24, 14. लौहितकेन P.; खण्डनखेन P. sec. m. शरावेण वा Md.

I. ix, 24, 17. अलब्ध्वोपवासः P. The reading in the text seems preferable, as lectio doctior.

गुरुँ हत्वा श्रोत्रियं वा कर्मसमाप्तमेतेनैव विधिनोत्तमादुच्छ्वासाच्चरेत् ॥ २४ ॥

नास्यास्मिँल्लोके प्रत्यापत्तिर्विद्यते।कल्मषं तु निर्हण्यते॥२५॥२४॥

१. ९. २५.

गुरुतल्पगामी सवृषणँ शिश्नं परिवास्याञ्जलावाधाय दक्षिणां दिशमनावृत्तिं व्रजेत् ॥ १ ॥

ज्वलितां वा सूर्मिं परिष्वज्य समाप्नुयात् ॥ २ ॥

सुरापोऽग्निस्पर्शाँ सुरां पिबेत् ॥ ३ ॥

स्तेनः प्रकीर्णकेशोंऽसे मुसलमादाय राजानं गत्वा कर्माचक्षीत । तेनैनँ हन्यात् । वधे मोक्षः ॥ ४ ॥

अनुज्ञातेऽनुज्ञातारमेनः स्पृशति ॥ ५ ॥

अग्निं वा प्रविशेत्तीक्ष्णं वा तप आयच्छेत् ॥ ६ ॥

भक्तापचयेन वात्मानँ समाप्नुयात् ॥ ७ ॥

कृच्छ्रसंवत्सरं वा चरेत् ॥ ८ ॥

अथाप्युदाहरन्ति ॥ ९ ॥

स्तेयं कृत्वा सुरां पीत्वा गुरुदारं च गत्वा ब्रह्महत्यामकृत्वा । चतुर्थकाला मितभोजनाः स्युरपोऽभ्यवेयुः सवनानुकल्पम् । स्थानासनाभ्यां विहरन्त एते त्रिभिर्वर्षैरप पापं नुदन्ते ॥१०॥

---

I. ix. 24, 25. नास्यान्यस्मिन् Md. After this Sútra Md. adds गवां हत्वा त्रिश्चान्द्रायणं चरेद्द्वादश यथाधिगं पशून् दत्वा ॥ But these words were not in Haradatta's copy, as he says in his Com. on I. ix. 26, 1, in regard to the wilful killing of a cow, बुद्धिपूर्वे तु । गां हत्वा वैश्यवदित्यादि स्मृत्यन्तरोक्तं द्रष्टव्यम् ॥

I. ix, 25, 1. परोवास्य Md.; आदाय Md.

I. ix, 25, 2. वा om. Md.

I. ix, 25, 5. एनस्पृशति P.

I. ix, 25, 6. P. U. begins a new Sútra with तीक्ष्णं.

I. ix, 25, 8. कृच्छ्रं संवत्सरं. N. U.; N.; P. But see Sútra I. ix, 27, 8.

I. ix, 25, 10. वर्षैरथ P.; P. U. Text, but see the Com.

प्रथमं वर्णं परिहाप्य प्रथमं वर्णं हत्वा संग्रामं गत्वावतिष्ठेत ।
तत्रैनँ हन्युः ॥ ११ ॥
अपि वा लोमानि त्वचं माँसमिति हावयित्वाग्निं प्रविशेत् ॥ १२ ॥
वायसप्रचलाकबर्हिणचक्रवाकहँसभासमण्डूकनकुलडेरिका-
श्वहिंसायाँ शूद्रवत्प्रायश्चित्तम् ॥ १३ ॥ २५ ॥

## १. ९. २६.

धेन्वनडुहोश्चाकारणात् ॥ १ ॥
धुर्यवाहप्रवृत्तौ चेतरेषां प्राणिनाम् ॥ २ ॥
अनाक्रोश्यमाक्रुश्यानृतं वोक्त्वा त्रिरात्रमक्षीराक्षारालवणभो-
जनम् ॥ ३ ॥
शूद्रस्य सप्तरात्रमभोजनम् ॥ ४ ॥
स्त्रीणां चैवम् ॥ ५ ॥
येष्वाभिशस्त्यं तेषामेकाङ्गं छित्त्वाप्राणहिँसायाम् ॥ ६ ॥
अनार्यवपैशुनप्रतिषिद्धाचारेष्वभक्ष्याभोज्यापेयप्राशने शूद्रायां च
रेतः सिक्त्वायोनौ च दोषवच्च कर्माभिसंधिपूर्वं कृत्वानभिसं-
धिपूर्वं वाब्लिङ्गाभिरप उपस्पृशेद्वारुणीभिर्वान्यैर्वा पवित्रैर्यथा
कर्माभ्यासः ॥ ७ ॥
गर्दभेनावकीर्णी निर्ऋतिं पाकयज्ञेन यजेत ॥ ८ ॥
तस्य शूद्रः प्राश्नीयात् ॥ ९ ॥
मिथ्याधीतप्रायश्चित्तम् ॥ १० ॥

---

I. ix, 25, 13. वायसकृकलासप्र° P. U.; ढेरीका° Md.
I. ix, 26, 2. धुर्यवाहप्रवाहप्रवृत्तौ Md.
I. ix, 26, 3. चोक्त्वा P. U.; N. U. °क्षारलवणं Md.
I. ix, 26, 6. आभिशस्त्यं P.; P. U.; N. But see above I. vii, 19, 8.
°प्राणिहिंसायां Md.; N.

संवत्सरमाचार्यहिते वर्तमानो वाचं यच्छेत्स्वाध्याय एवोत्सृज्यमानो वाचमाचार्य आचार्यदारे वा भिक्षाचर्ये च ॥ ११ ॥

एवमन्येष्वपि दोषवत्स्वपतनीयेषूत्तराणि यानि वक्ष्यामः ॥१२॥

काममन्युभ्यां वा जुहुयात्कामोकार्षीन्मन्युरकार्षीदिति जपेद्वा ॥ १३ ॥

पर्वणि वा तिलभक्ष उपोष्य वा श्वोभूत उदकमुपस्पृश्य सावित्रीं प्राणायामशः सहस्रकृत्व आवर्तयेद्प्राणायामशो वा ॥ १४ ॥ २६ ॥

१. ९. २७.

श्रावण्यां पौर्णमास्यां तिलभक्ष उपोष्य वा श्वोभूते महानदमुदकमुपस्पृश्य सावित्र्या समित्सहस्रमादध्याज्जपेद्वा ॥ १ ॥

इष्टियज्ञक्रतून्वा पवित्रार्थानाहरेत् ॥ २ ॥

अभोज्यं भुक्त्वा नैष्पुरीष्यम् ॥ ३ ॥

तत्सप्तरात्रेणावाप्यते ॥ ४ ॥

हेमन्तशिशिरयोर्वोभयोः संध्योरुदकमुपस्पृशेत् ॥ ५ ॥

कृच्छ्रद्वादशरात्रं वा चरेत् ॥ ६ ॥

त्र्यहमनक्ताश्यदिवाशी ततस्त्र्यहं त्र्यहमयाचितव्रतस्त्र्यहं नाश्नाति किंचनेति कृच्छ्रद्वादशरात्रस्य विधिः ॥ ७ ॥

---

I. ix, 26, 11. उत्सृजमानो Md.; आचार्यवदाचार्यदारे भिक्षाचर्ये च Md.; भिक्षाचर्यै N.; P.; P. U.

I. ix, 26, 12. अपतनीयेषु om. Md.

I. ix, 26, 13. P. U. makes जपेद्वा a separate Sútra.

I. ix, 26, 14. महानदमुदकमुप° N. U. The reading is taken from the Hiraṇyakes'isútra.

I. ix, 27, 1. वा om. Md.

I. ix, 27, 3. नैष्पुरीषं N. U.; N.; N. U. joins this with the following Sútra.

I. ix, 27, 6. कृच्छ्रं द्वादशरात्रं N.

I. ix, 27, 7. अयाचितं व्रतं Md. कृच्छ्रं द्वादशरात्रस्य Md.

एतमेवाभ्यसेत्संवत्सरँ स कृच्छ्रसंवत्सरः ॥ ८ ॥
अथापरम् । बहून्यप्यपतनीयानि कृत्वा त्रिभिरनश्नत्पारायणैः
कृतप्रायश्चित्तो भवति ॥ ९ ॥
अनार्यां शयने बिभ्रद्ददद्वृद्धिं कषायपः ।
अब्राह्मण इव वन्दित्वा तृणेष्वासीत पृष्ठतप् ॥ १० ॥
यदेकरात्रेण करोति पापं कृष्णं वर्णं ब्राह्मणः सेवमानः ।
चतुर्थकाल उदकाभ्यवायी त्रिभिर्वर्षैस्तदपहन्ति पापम् ।११।
॥ २७ ॥

॥ इत्यापस्तम्बीयधर्मसूत्रे प्रथमे प्रश्ने नवमः पटलः समाप्तः ॥

यथा कथा च परपरिग्रहमभिमन्यते स्तेनो ह भवतीति कौत्स-
हारीतौ तथा कण्वपुष्करसादी ॥ १ ॥
सन्त्यपवादाः परिग्रहेष्विति वार्ष्यायणिः ॥ २ ॥
शम्योषा युग्यघासो न स्वामिनः प्रतिषेधयन्ति ॥ ३ ॥
अतिव्यपहारो व्यृद्धो भवति ॥ ४ ॥
सर्वत्रानुमतिपूर्वमिति हारीतः ॥ ५ ॥
न पतितमाचार्यं ज्ञातिं वा दर्शनार्थो गच्छेत् ॥ ६ ॥
न चास्माद्भोगानुपयुञ्जीत ॥ ७ ॥
यदृच्छासंनिपात उपसंगृह्य तूष्णीं व्यतिव्रजेत् ॥ ८ ॥

---

I. ix, 27, 8. एवमेतान्य° P. U. text only; एवमेव N. U.; अभ्यस्येत् N.; N. U.; अभ्यस्येत्कृच्छ्रसंवत्सरं स° Md.
I. ix, 27, 9. अनश्नन्पराय° P. U.
I. ix, 27, 11. अभ्युपायी. P. sec. m., N. U.; अभ्ययायी N.
I. ix, 28, 1. काण्व° Md., N. U.
I. x, 28, 2. परपरिग्रहेष्विति P. sec. m.
I. x, 28, 4. अतिव्यवहारः Md., N. U.
I. x, 28, 5. अनुमिति° P.; N.
I. x, 28, 6. दर्शनार्थं N.

माता पुत्रत्वस्य भूयाँसि कर्माण्यारभते । तस्याँ शुश्रूषा नित्या पतितायामपि ॥ ९ ॥

न तु धर्मसंनिपातः स्यात् ॥ १० ॥

अधर्माहृतान्भोगाननुज्ञाय न वयं चाधर्मश्चेत्यभिव्याहृत्याधोनाभ्युपरिजान्वाच्छाद्य त्रिषवणमुदकमुपस्पृशन्नक्षीराक्षारालवणं भुञ्जानो द्वादश वर्षाणि नागारं प्रविशेत् ॥ ११ ॥

ततः सिद्धिः ॥ १२ ॥

अथ संप्रयोगः स्यादार्यैः ॥ १३ ॥

एतदेवान्येषामपि पतनीयानाम् ॥ १४ ॥

गुरुतल्पगामी तु सुषिराँ सूर्मिं प्रविश्योभयत आदीप्याभिदहेदात्मानम् ॥ १५ ॥

मिथ्यैतदिति हारीतः ॥ १६ ॥

यो ह्यात्मानं परं वाभिमन्यतेभिशस्त एव स भवति ॥ १७ ॥

एतेनैव विधिनोत्तमादुच्छ्वासाच्चरेत् । नास्यास्मिँल्लोके प्रत्यापत्तिर्विद्यते । कल्मषं तु निर्हण्यते ॥ १८ ॥

दारव्यतिक्रमी खराजिनं बहिर्लोम परिधाय दारव्यतिक्रमिणे भिक्षामिति सप्तागाराणि चरेत् । सा वृत्तिः षण्मासान् ॥ १९ ॥

स्त्रियास्तु भतृव्यतिक्रमे कृच्छ्रद्वादशरात्राभ्यासस्तावन्तं कालम् ॥ २० ॥

अथ भ्रूणहा श्वाजिनं खराजिनं वा बहिर्लोम परिधाय पुरुषशिरः प्रतीपानार्थमादाय ॥ २१ ॥ २८ ॥

---

I. x, 28, 10. संनिवापः Md.

I. x, 28, 11. °क्षारल° Md.

I. x, 28, 15. दहेत् P. U.

I. x, 28, 20. भर्तृव्यतिक्रमे P. U.; P.; N. U.; Md. But the correctness of the reading of N. is proved by the Com. भतृव्यतिक्रम इति च्छान्दसो रेफलोपः ॥

I. x, 28, 21. प्रतिपादनार्थमादाय Md.; प्रतिपानार्थं N.; P. U. ends the Khaṇḍa after I. x, 29, 1.

१. १०. २९.

खट्वाङ्गं दण्डार्थे कर्मनामधेयं प्रब्रुवाणश्चङ्क्रम्येत को भ्रूणघ्ने भिक्षामिति। ग्रामे प्राणवृत्तिं प्रतिलभ्य शून्यागारं वृक्षमूलं वाभ्युपाश्रयेन्न हि म आर्यैः संप्रयोगो विद्यते । एतेनैव विधिनोत्तमादुच्छ्वासाच्चरेत् ।नास्यास्मिँल्लोके प्रत्यापत्तिर्विद्यते।कल्मषं तु निर्हण्यते ॥ १ ॥

यः प्रमत्तो हन्ति प्राप्तं दोषफलम् ॥ २ ॥

सह संकल्पेन भूयः ॥ ३ ॥

एवमन्येष्वपि दोषवत्सु कर्मसु ॥ ४ ॥

तथा पुण्यक्रियासु ॥ ५ ॥

परीक्षार्थोपि ब्राह्मण आयुधं नादधीत ॥ ६ ॥

यो हिँसार्थमभिक्रान्तँ हन्ति मन्युरेव मन्युँ स्पृशति न तस्मिन्दोष इति पुराणे ॥ ७ ॥

---

I. x, 29, 1. चंक्रमेत P. U.; P.; N.

I. x, 29, 2. प्रयतो N. U. Text.; P. pr. m.

I. x, 29, 6. आददीत N. U.; N.; P. U. sec. m.

I. x, 29, 7. Md. adds after this Sútra :—

अध्यायनं कुलं जातं यो हन्यादाततायिनम् ।
न तेन भ्रूणहा स स्यान्मन्युस्तं मन्युमृच्छति ॥
अग्निदो गरदश्चैव शस्त्रपाणिर्धनापहः ।
क्षेत्रदारहरश्चैव षडेते आततायिनः ॥
आततायिनमायान्तमपि वेदान्तपारगम् ।
जिघांसन्तं जिघांसियान्न तेन भ्रूणहा भवेत् ॥
गोब्राह्मणानां स्वशरीरहेतोरा श्राभिघातः शरणागतं च ।
स्त्रीणां च केशग्रहणे प्रवृत्ते विप्रेण शस्त्रग्रहणं प्रशस्तम् ॥

In the first line अध्यापकं and कुले must be read, and in the sixth जिघांसीयात्.

The first two lines are from Baudháyana I. 10, the next four from Vásishṭha III., and, I suppose, they have got into the text from the commentary, in which they are actually quoted. The Hiraṇyakes'isútra has the first two lines, preceded by अथाप्युदाहरन्ति। But it is quite clear from Haradatta's words, that he did not know them. See Notes to the Translation.

अथाभिशस्ताः समवयसाय चरेयुर्धार्म्यमिति साँशित्येतरेतरयाजका इतरेतराध्यापका मिथो विवहमानाः ॥ ८ ॥

पुत्रान्संनिष्पाद्य ब्रूयुर्विप्रव्रजतास्मदेवँ ह्यस्मत्स्वार्याः संप्रत्यपत्स्यथेति ॥ ९ ॥

अथापि न सेन्द्रियः पतति ॥ १० ॥

तदेतेन वेदितव्यम् । अङ्गहीनो हि साङ्गं जनयति ॥ ११ ॥

मिथ्यैतदिति हारीतः ॥ १२ ॥

दधिधानीसधर्मा स्त्री भवति ॥ १३ ॥

यो हि दधिधान्यामप्रयतं पय आतच्य मन्थति न तेन धर्मकृत्यं क्रियते । एवमशुचि शुक्लं यन्निर्वर्तते न तेन सह संप्रयोगो विद्यते ॥ १४ ॥

अभीचारानुव्याहारावशुचिकरावपतनीयौ ॥ १५ ॥

पतनीयाविति हारीतः ॥ १६ ॥

पतनीयवृत्तिस्त्वशुचिकराणां द्वादश मासान्द्वादशार्धमासान्द्वादश द्वादशाहान्द्वादश सप्ताहान्द्वादश त्र्यहान्द्वादशाहँ सप्ताहं त्र्यहं व्यहमेकाहम् ॥ १७ ॥

---

I. x, 29, 8. विवाहमानाः P. U.; P.; N. U. सांशिक्येतर° N. U.; Md.; P. pr. m.

I. x, 29, 9. अस्मात्स्वार्याः P. pr. m; P. U.; N. The Com. gives no explanation of this form, or of its v. l. अस्मत्स्वा° (N. U.; P. sec. m. Md.), but simply its equivalent अस्मासु. I prefer अस्मत्सु, because it admits of an explanation, अस्मद् + सु.—विप्रव्रजिताः स्मदेवं ह्यस्मत्स्वार्याः संप्रत्यवपत्स्यते. Md. But see the Com.

I. x, 29, 10. तथापि P.

I. x, 29, 14. आतंच्य Md. आतच्यमथिन P. U. निवर्तते N.; P. U.; N. U.

I. x, 29, 15. अभिचार° Md.; N. But see the Com. अनुव्यवहारौ P. U.

I. x, 29, 17. Md. adds द्वादश व्यहान् after सप्ताहान्.

इत्यशुचिकरनिर्वेशो यथा कर्माभ्यासः ॥ १८ ॥ २९ ॥

॥ इत्यापस्तम्बीयधर्मसूत्रे प्रथमे प्रश्ने दशमः पटलः समाप्तः ॥

१. ११. ३०.

विद्यया स्नातीत्येके ॥ १ ॥

तथा व्रतेनाष्टाचत्वारिंशत्परीमाणेन ॥ २ ॥

विद्या व्रतेन चेत्येके ॥ ३ ॥

तेषु सर्वेषु स्नातकवद्वृत्तिः ॥ ४ ॥

समाधिविशेषाच्छ्रुतिविशेषाच्च पूजायां फलविशेषः ॥ ५ ॥

अथ स्नातकव्रतानि ॥ ६ ॥

पूर्वेण ग्रामान्निष्क्रमणप्रवेशनानि शीलयेदुत्तरेण वा ॥ ७ ॥

संध्योश्च बहिर्ग्रामादासनं वाग्यतश्च ॥ ८ ॥

विप्रतिषेधे श्रुतिलक्षणं बलीयः ॥ ९ ॥

सर्वान्रागान्वाससि वर्जयेत् ॥ १० ॥

कृष्णं च स्वाभाविकम् ॥ ११ ॥

अनूद्भासि वासो वसीत ॥ १२ ॥

अप्रतिकृष्टं च शक्तिविषये ॥ १३ ॥

दिवा च शिरसः प्रावरणं वर्जयेन्मूत्रपुरीषयोः कर्म परिहाप्य ॥ १४ ॥

शिरस्तु प्रावृत्य मूत्रपुरीषे कुर्याद्भूम्यां किंचिदन्तर्धाय ॥ १५ ॥

---

I. x, 29, 18. निर्वेषः P.; N.; N. U.; Md. इति om Md.

I. xi, 30, 2. वृत्तेन P. U.; अष्टचत्वारिंशद्वर्षप.° P. sec. m. °परिमाणेन N.; Md.; N. U. Text; but see the Com.

I. xi, 30, 3. त्रिद्यया P. sec. m.

I. xi, 30, 5. पूजायां च Md.

I. xi, 30, 8. वाग्यतस्य Md.

I. xi, 30, 11. कृष्णं वा N. U.

I. xi, 30, 12. अनुद्भासि Md., but see the Com.

I. xi, 30, 13. अप्रतिकृष्णं N. U.; P. U.

छायायां मूत्रपुरीषयोः कर्म वर्जयेत् ॥ १६ ॥
स्वां तु छायामवमेहेत् ॥ १७ ॥
न सोपानन्मूत्रपुरीषे कुर्यात्कृष्टे पथ्यप्सु च ॥ १८ ॥
तथा ष्ठीवनमैथुनयोः कर्माप्सु वर्जयेत् ॥ १९ ॥
अग्निमादित्यमपो ब्राह्मणं गां देवताश्चाभिमुखो मूत्रपुरीषयोः कर्म वर्जयेत् ॥ २० ॥
अश्मानं लोष्ठमार्द्रानोषधिवनस्पतीनूर्ध्वानाच्छिद्य मूत्रपुरीषयोः शुन्धनं वर्जयेत् ॥ २१ ॥
अग्निमपो ब्राह्मणं गां देवता द्वारं प्रति पादं च शक्तिविषये नाभिप्रसारयीत ॥ २२ ॥
अथाप्युदाहरन्ति ॥ २३ ॥ ३० ॥

१. ११. ३१.

प्राङ्मुखोन्नानि भुञ्जीत उच्चरेद्दक्षिणामुखः ।
उदङ्मुखो मूत्रं कुर्यात्प्रत्यक्पादावनेजनमिति ॥ १ ॥
आरादावसथान्मूत्रपुरीषे कुर्याद्दक्षिणां दिशं दक्षिणापरां वा ॥२॥
अस्तमिते च बहिर्ग्रामादारादावसथाद्वा मूत्रपुरीषयोः कर्म वर्जयेत् ॥ ३ ॥

---

I. xi, 30, 17. The Com. states that नु छायां, not तु च्छायां, is the correct reading.

I. xi, 30, 22. °मादित्यं Md. गा P. U.; Md.; N. U. प्रतिवातं P. U.; N.; P. But see the Com.

I. xi, 31, 2. °आराच्चाव° Md. P. U. begins a new Sútra with दक्षिणाम.

I. xi, 31, 3. शुन्धनं वर्जयेत् N. U. After this Sútra Md. and N. U. add: शिरःपरिवेष्टनं प्रथमं निवीतं द्वितीयं दिशावलोकनं तृतीयमन्तर्धानं चतुर्थं मौनं पञ्चमं पुरीषं षष्ठं मृत्तिकाग्रहणं सप्तममुदकमष्टममेतदष्टकमित्याचक्षते ॥ [इत्येतदष्टकमित्या° N. U.].

Though N. U. adds after these words, स्पष्टार्थम्, I do not believe that they originally belonged to the Sútra. For their substance has already been given I. xi, 30, 15, and they break the connexion of the preceding and following Sútras, which according to their construction belong closely together.

Neither of the other MSS nor the Hir. S. show the slightest trace of a lacuna.

देवताभिधानं चाप्रयतः ॥ ४ ॥

परुषं चोभयोर्देवतानाँ राज्ञश्च ॥ ५ ॥

ब्राह्मणस्य गोरिति पदोपस्पर्शनं वर्जयेत् ॥ ६ ॥

हस्तेन चाकारणात् ॥ ७ ॥

गोर्दक्षिणानां कुमार्याश्च परीवादान्वर्जयेत् ॥ ८ ॥

स्तृहन्तीं च गां नाचक्षीत ॥ ९ ॥

सँसृष्टां च वत्सेनानिमित्ते ॥ १० ॥

नाधेनुमधेनुरिति ब्रूयात् ॥ ११ ॥

धेनुभव्येत्येव ब्रूयात् ॥ १२ ॥

न भद्रं भद्रमिति ब्रूयात् ॥ १३ ॥

पुण्यं प्रशास्तमित्येव ब्रूयात् ॥ १४ ॥

वत्सतन्तीं च नोपरि गच्छेत् ॥ १५ ॥

प्लेङ्खावन्तेरण च नातीयात् ॥ १६ ॥

नासौ मे सपत्न इति ब्रूयात् । यद्यसौ मे सपत्न इति ब्रूयाद्द्विषन्तं भ्रातृव्यं जनयेत् ॥ १७ ॥

नेन्द्रधनुरिति परस्मै प्रब्रूयात् ॥ १८ ॥

न पततः संचक्षीत ॥ १९ ॥

---

I. xi, 31, 9. स्पृहंतीं P. sec. m.

I. xi, 31, 13. P. U. joins this and the following Sútra.

I. xi, 31, 15. वत्सतन्त्रीं Md.; Md. and N. U. and P. U., after giving the Com. add यद्युपरि गच्छेदश्रियमाणो भवति [अश्रीमान्भवति P. U.].

I. xi, 31, 16. प्रेङ्खाव° N. U. यद्यतोयादनायुष्यो भवति Md.; P. U.; N. U.

I. xi, 31, 18. मणिधनुरित्येव ब्रूयात् is added in Md., and N. U. Com. has इन्द्रधनुराकाशे पश्यन्परस्मै तेन शब्देन न ब्रूयात्। मणिधनुरित्येव ब्रूयात् । यद्यवश्यं वक्तव्यं मणिधनुरित्येव ब्रूयात् । गौतमीये च तथा दर्शनात् ॥ But P. U. Com. has . . . न प्रब्रूयात् । यद्यवश्यं वक्तव्यं तर्हि मणिधनुरिति ब्रूयात्। गौतमीये दर्शनात् ॥

I. xi, 31, 19. पतितः Md.; पततः twice P. sec. m.

उद्यन्तमस्तयन्तं चादित्यं दर्शने वर्जयेत् ॥ २० ॥

दिवादित्यः सत्त्वानि गोपायति नक्तं चन्द्रमाः। तस्मादमावास्यायां निशायाँ स्वाधीय आत्मनो गुप्तिमिच्छेत्प्रायत्यब्रह्मचर्ये काले-चर्यया च ॥ २१ ॥

सह ह्येतांँ रात्रिँ सूर्याचन्द्रमसौ वसतः ॥ २२ ॥

न कुसृत्या ग्रामं प्रविशेत्। यदि प्रविशेन्नमो रुद्राय वास्तोष्पतय इत्येतामृचं जपेदन्यां वा रौद्रीम् ॥ २३ ॥

नाब्राह्मणायोच्छिष्टं प्रयच्छेत्। यदि प्रयच्छेद्दन्तान्स्कुप्त्वा तस्मिन्नवधाय प्रयच्छेत् ॥ २४ ॥

क्रोधादीँश्च भूतदाहीयान्दोषान्वर्जयेत् ॥ २५ ॥ ॥ ३२ ॥

१. ११. ३२.

प्रवचनयुक्तो वर्षाशरदं मैथुनं वर्जयेत् ॥ १ ॥

मिथुनीभूय च न तया सह सर्वाँ रात्रिँ शयीत ॥ २ ॥

शयानश्चाध्यापनं वर्जयेत् ॥ ३ ॥

न च तस्याँ शय्यायामध्यापयेद्यस्याँ शयीत ॥ ४ ॥

अनाविःस्रगनुलेपणः स्यात् ॥ ५ ॥

सदा निशायां दारं प्रत्यलंकुर्वीत ॥ ६ ॥

सशिरा वमज्जनमप्सु वर्जयेत् ॥ ७ ॥

अस्तमिते च स्नानम् ॥ ८ ॥

---

I. xi, 31, 20. परिवर्जयेत् P. U.

I. xi, 31, 21. साधोयः Md. The Com. mentions a reading आधीयमानः ॥ ब्रह्मचर्याभ्यां P. sec. m.

I. xi, 31, 24. कुप्या N. U.; स्कुष्ट्वा P. U.; P. pr. m.

I. xi, 32, 1. वर्षाः शरदं N. U.

I. xi, 32, 5. N. U. leaves out both Visargas; Md., P., P. U. leave out the first, and N. the second.—MSS अनुलेपन: But Haradatta according to N. U.; णत्वं पूर्ववत्। Compare I. iii, 11, 13.

पालाशमासनं पादुके दन्तप्रक्षालनमिति च वर्जयेत् ॥ ९ ॥

स्तुतिं च गुरोः समक्षं यथा सुस्नात इति ॥ १० ॥

आ निशाया जागरणम् ॥ ११ ॥

अनध्यायो निशायामन्यत्र धर्मोपदेशाच्छिष्येभ्यः ॥ १२ ॥

मनसा वा स्वयम् ॥ १३ ॥

ऊर्ध्वमर्धरात्रादध्ययनम् ॥ १४ ॥

नापररात्रमुत्थायानध्याय इति संविशेत् १५ ॥

काममपाश्शयीत ॥ १६ ॥

मनसा वाधीयीत ॥ १७ ॥

क्षुद्रान्क्षुद्राचरितांश्च देशान्न सेवेत ॥ १८ ॥

सभाः समाजांश्च ॥ १९ ॥

समाजं चेद्गच्छेत्प्रदक्षिणीकृत्यापेयात् ॥ २० ॥

नगरप्रवेशनानि च वर्जयेत् ॥ २१ ॥

प्रश्नं च न विब्रूयात् ॥ २२ ॥

अथाप्युदाहरन्ति ॥ २३ ॥

---

I. xi, 32, 10. P. U. leaves out यथा सुस्नात इति in the Text, but has it in the Com. सुस्नातमिति. Md., N. U.

I. xi, 32, 14. अध्यापनम् Md.; P. sec. m.; N. अनध्यायम् N. U. Text. But see the Com.

I. xi, 32, 15. संवेशयेत् Md.

I. xi, 32, 16. कामम‍ुपशयीत Md. अपशयीत N. U.; P. sec. m. काम[हे वासुदेव] मपशाशयीत N.; अपशाशयीत P. pr. m. कामपाश्रयः शयीत P. U. pr. m. अपाशयः शशयीत P. U. sec. m. But see the Com., which points either to अपाश्शयीत or to अपाशशयीत. I prefer the former, which must be explained as a Prakritic form with श्श for श्र; see the Introduction.

I. xi, 32, 21. च om. Md.; N. U.

I. xi, 32, 22—25. Md. om. these Sútras, probably, because both S. 21 and 25 end with वर्जयेत्.

मूलं तूलं वृहति दुर्विवक्तुः प्रजां पशूनायतनं हिनस्ति
धर्मप्रह्लादन कुमालनाय रुदन्ह मृत्युर्व्युवाच प्रश्नमिति ॥ २४ ॥
गार्दभं यानमारोहणे विषमारोहणावरोहणानि च वर्जयेत् ॥ २५ ॥
बाहुभ्यां च नदीतरणम् ॥ २६ ॥
नावं च सांशयिकीम् ॥ २७ ॥
तृणच्छेदनलोष्ठविमर्दनाष्ठीवनानि चाकारणात् ॥ २८ ॥
यच्चान्यत्परिचक्षते यच्चान्यत्परिचक्षते ॥ २९ ॥ ३२ ॥
॥इत्यापस्तम्बीयधर्मसूत्रे प्रथमे प्रश्न एकादशः पटलः समाप्तः॥

॥ इति प्रथमः प्रश्नः समाप्तः ॥

---

I. xi, 32, 24. धर्मप्रमादन P. U.; धर्मप्रल्हादन N. U.; P.; N. But see the Com.

I. xi, 32, 25. °वरोहणानिति च P. विषमावरोहावरोह° P. U.

I. xi, 32, 26. नदोतरं Md.; N. U.

1. xi, 32, 27. नावां N. This reading is mentioned by Haradatta, see the Com. After this Sútra Md. adds: अश्रुद्वारे यस्यैव क्रिमिरुत्पद्यतेथापरं वासः सुवर्णं च दत्वा पञ्चगव्येन स्नात्वा च पीत्वा च कृच्छ्रेण शुध्यत इति। N. U. also has मरुद्वारे तु तस्यैव क्रिमिरुत्पद्येत वरं वासः सुवर्णं दत्वा कृच्छ्रेण शुध्यत इति, which seems to be a corruption of Md.'s reading. The Com. does not mention the Sútra, and it is probably an interpolation, and a clumsy one, as it has nothing to do with the matters treated of before or afterwards.

२. १. १.

पाणिग्रहणादधि गृहमेधिनोर्व्रतम् ॥ १

कालयोर्भोजनम् ॥ २ ॥

अतृप्तिश्चान्नस्य ॥ ३ ॥

पर्वसु चोभयोरुपवासः ॥ ४ ॥

औपवस्तमेव कालान्तरे भोजनम् ॥ ५ ॥

तृप्तिश्चान्नस्य ॥ ६ ॥

यच्चैनयोः प्रियँ स्यात्तदेतस्मिन्नहनि भुञ्जीयाताम् ॥ ७ ॥

अधश्च शयीयाताम् ॥ ८ ॥

मैथुनवर्जनं च ॥ ९ ॥

श्वोभूते स्थालीपाकः ॥ १० ॥

तस्योपचारः पार्वणेन व्याख्यातः ॥ ११ ॥

नित्यं लोक उपदिशन्ति ॥ १२ ॥

यत्र क्व चाग्निमुपसमाधास्यन्स्यात्तत्र प्राचीरुदीचीश्च तिस्रस्तिस्रो लेखा लिखित्वाद्भिरवोक्ष्याग्निमुपसमिन्ध्यात् ॥ १३ ॥

उत्सिच्यैतदुदकमुत्तरेण पूर्वेण वान्यदुपदध्यात् ॥ १४ ॥

नित्यमुदधानान्यद्भिररिक्तानि स्युर्गृहमेधिनोर्व्रतम् ॥ १५ ॥

अहन्यसंवेशनम् ॥ १६ ॥

ऋतौ च संनिपातो दारेणानु व्रतम् ॥ १७ ॥

अन्तरालेपि दार एव ॥ १८ ॥

---

II. i, 1, 1—8. These Sútras up to . . . यातम् are left out by Md.

II. i, 1, 13. ततः प्राचोः Md.

II. i, 1, 14. P. U. leaves out the Com. on this Sútra.

II. i, 1, 17. Md. gives the following: ऋतौ च संनिपाते चतुर्थीप्रभृत्या षोडशीमुत्तरामुत्तरां युग्मान्वैभीतकान्प्रजानिश्रेयसमृतुगमनमित्युपदिशन्ति दारेणानु व्रतम्। The passage in the middle belongs to A'pastamba, but does not form part of the Dharmasútra, as may be seen from the Com.

ब्राह्मणवचनाच्च संवेशनम् ॥ १९ ॥
स्त्रीवाससैव संनिपातः स्यात् ॥ २० ॥
यावत्संनिपातं चैव सहशय्या ॥ २१ ॥
ततो नाना ॥ २२ ॥
उदकोपस्पर्शनम् ॥ २३ ॥ १ ॥

२. १. २.

अपि वा लेपान्प्रक्षाल्याचम्य प्रोक्षणमङ्गानाम् ॥ १ ॥
सर्ववर्णानाँ स्वधर्मानुष्ठाने परमपरिमितँ सुखम् ॥ २ ॥
ततः परिवृत्तौ कर्मफलशेषेण जातिँ रूपं वर्णं बलं मेधां प्रज्ञां द्रव्याणि धर्मानुष्ठानमिति प्रतिपद्यते । तच्चक्रवदुभयोर्लोकयोः सुख एव वर्तते ॥ ३ ॥
यथौषधिवनस्पतीनां वीजस्य क्षेत्रकर्मविशेषे फलपरिवृद्धिरेवम् ॥ ४ ॥
एतेन दोषफलपरिवृद्धिरुक्ता ॥ ५ ॥
स्तेनोभिशस्तो ब्राह्मणो राजन्यो वैश्यो वा परस्मिँल्लोकेपरिमिते निलये वृत्ते जायते चाण्डालो ब्राम्हणः पौल्कसो राजन्यो वैणो वैश्यः ॥ ६ ॥
एतेनान्ये दोषफलैः कर्मभिः परिध्वँसा दोषफलासु योनिषु जायन्ते वर्णपरिध्वँसायाम् ॥ ७ ॥
यथा चाण्डालोपस्पर्शने संभाषायां दर्शने च दोषस्तत्र प्रायश्चित्तम् ॥ ८ ॥

---

II. i, 2, 2. अपरिमितसुखम् P. परमम° P. U.
II. i, 2, 3. ततः परिवृत्तौ ततः Md.
II. i, 2, 4. °विशेषः Md.
II. i, 2, 6. वैणो om. Md. निरये N.
II. i, 2, 7. अन्यो N. परिध्वस्तो Md. परिध्वस्ताः P. U. Text; परिध्वंसा . . वर्ण° om. N.

अवगाहनमपामुपस्पर्शने संभाषायां ब्राह्मणसंभाषा दर्शने ज्योतिषां दर्शनम् ॥ ९ ॥ २ ॥

॥ इत्यापस्तम्बीयधर्मसूत्रे द्वितीये प्रश्ने प्रथमः पटलः समाप्तः ॥

आर्याः प्रयता वैश्वदेवेऽन्नसँस्कर्तारः स्युः ॥ १ ॥
भाषां कासं क्षवथुमित्यभिमुखोऽन्नं वर्जयेत् ॥ २ ॥
केशानङ्गं वासश्चालभ्याप उपस्पृशेत् ॥ ३ ॥
आर्याधिष्ठिता वा शूद्राः सँस्कर्तारः स्युः ॥ ४ ॥
तेषाँ स एवाचमनकल्पः ॥ ५ ॥
अधिकमहरहः केशश्मश्रुलोमनखवापनम् ॥ ६ ॥
उदकोपस्पर्शनं च सह वाससा ॥ ७ ॥
अपि वाष्टमीष्वेव पर्वसु वा वपेरन् । ८ ॥
परोक्षमन्नँ सँस्कृतमग्नावधिश्रित्याद्भिः प्रोक्षेत् । तद्देवपवित्रमित्याचक्षते ॥ ९ ॥
सिद्धेऽन्ने तिष्ठन्भूतमिति स्वामिने प्रब्रूयात् ॥ १० ॥
तत्सुभूतं विराडन्नं तन्मा क्षायीति प्रतिवचनः ॥ ११ ॥
गृहमेधिनोर्यदशनीयस्य होमा बलयश्च स्वर्गपुष्टिसंयुक्ताः ॥ १२ ॥
तेषां मन्त्राणामुपयोगे द्वादशाहमधःशय्या ब्रह्मचर्यं क्षारलवणवर्जनं च ॥ १३ ॥
उत्तमस्यैकरात्रमुपवासः ॥ १४ ॥

---

II. ii, 3, 4. सँस्कर्तारस्युः N.

II. ii, 3, 5. °नः संकल्पः N. U. Text and Com.

II. ii, 3, 6. लोम om. P. U.

II. ii, 3, 9. संस्कृतमन्नं Md. तदेव N. U.

II. ii, 3, 10. Md. has lost fol. 18, which contained this and the following Sútras down to II. ii, 5, 6.

II. ii, 3, 11. प्रतिवचनं P. U.; N. U.; but see the Com.

II. ii, 3, 12. गृहमेधिनो यद° P.; N. U.; N. So also the Hiraṇyakes'ins. Still I consider the dual to be the correct reading, because for all the rites, performed by a Gṛihastha, the wife is also wanted, and because A'pastamba uses the dual also above, II. i, 1, 1; and II. i, 1, 14.

बलीनां तस्यतस्य देशे सँस्कारो हस्तेन परिमृज्यावोक्ष्य न्युप्य पश्चात्परिषेचनम् ॥ १५ ॥
औपासने पचने वा षड्भिराद्यैः प्रतिमन्त्रँ हस्तेन जुहुयात् ॥ १६॥
उभयतः परिषेचनं यथा पुरस्तात् ॥ १७ ॥
एवं बलीनां देशेदेशे समवेतानाँ सकृत्सकृदन्ते परिषेचनम् ॥ १८ ॥
सति सूपसँसृष्टेन कार्याः ॥ १९ ॥
अपरेणाग्निँ सप्तमाष्टमाभ्यामुदगपवर्गम् ॥ २० ॥
उदधानसंनिधौ नवमेन ॥ २१ ॥
मध्येगारस्य दशमैकादशाभ्यां प्रागपवर्गम् ॥ २२ ॥
उत्तरपूर्वदेशेगारस्योत्तरैश्चतुर्भिः ॥ २३ ॥ ३ ॥

२. २. ४.

शय्यादेशे कामलिङ्गेन ॥ १ ॥
देहल्यामन्तरिक्षलिङ्गेन ॥ २ ॥
उत्तरेणापिधान्याम् ॥ ३ ॥
उत्तरैर्ब्रह्मसदने ॥ ४ ॥
दक्षिणतः पितृलिङ्गेन प्राचीनावीत्यवाचीनपाणिः कुर्यात् ॥५॥
रौद्र उत्तरो यथा देवताभ्यः ॥ ६ ॥
तयोर्नाना परिषेचनं धर्मभेदात् ॥ ७ ॥
नक्तमेवोत्तमेन वैहायसम् ॥ ८ ॥
य एतानव्यग्रो यथोपदेशं कुरुते नित्यः स्वर्गः पुष्टिश्च ॥ ९ ॥
अग्रं च देयम् ॥ १० ॥

---

II. ii, 4, 2. P. U. joins Sútras 1 and 2.

II. ii, 4, 9. नित्यस्वर्गः P. नित्यसर्गः N. U.

अतिथीनेवाग्रे भोजयेत् ॥ ११ ॥
बालान्वृद्धान्रोगसंबन्धान्स्त्रीश्चान्तर्वत्नीः ॥ १२ ॥
काले स्वामिनावन्नार्थिनं न प्रत्याचक्षीयाताम् ॥ १३ ॥
अभावे भूमिरुदकं तृणानि कल्याणी वागिति ।
एतानि वै सतोगारे न क्षीयन्ते कदाचनेति ॥ १४ ॥
एवंवृत्तावनन्तलोकौ भवतः ॥ १५ ॥
ब्राह्मणायानधीयानायासनमुदकमन्नमिति देयम् । न प्रत्युत्तिष्ठेत् ॥ १६ ॥
अभिवादनायैवोत्तिष्ठेदभिवाद्यश्चेत् ॥ १७ ॥
राजन्यवैश्यौ च ॥ १८ ॥
शूद्रमभ्यागतं कर्मणि नियुञ्ज्यात् । अथास्मै दद्यात् ॥ १९ ॥
दासा वा राजकुलादाहृत्यातिथिवच्छूद्रं पूजयेयुः ॥ २० ॥
नित्यमुत्तरं वासः कार्यम् ॥ २१ ॥
अपि वा सूत्रमेवोपवीतार्थे ॥ २२ ॥
यत्र भुज्यते तत्समूह्य निर्हृत्यावोक्ष्य तं देशममत्रेभ्यो लेपान्संकृष्याद्भिः संसृज्योत्तरतः शुचौ देशे रुद्राय निनयेत् । एवं वास्तु शिवं भवति ॥ २३ ॥
ब्राह्मण आचार्यः स्मर्यते तु ॥ २४ ॥
आपदि ब्राह्मणेन राजन्ये वैश्ये वाध्ययनम् ॥ २५ ॥
अनुगमनं च पश्चात् ॥ २६ ॥
तत ऊर्ध्वं ब्राह्मण एवाग्रे गतौ स्यात् ॥ २७ ॥ ४ ॥

---

II. ii, 4, 12. संबन्धान् P.; P. U.; N. U.
II. ii, 4, 17. अभिवादनायो° P. U. Text.
II. ii, 4, 18. N. U. joins Sútras 18 and 19.
II. ii, 4, 19. अभ्यागतं N. U.
II. ii, 4, 23. लेपान्त्सं° N. लेपात्सं° P. लेपात्सं° N. U.
II. ii, 4, 24. आचार्यस्मर्यते P.
II. ii, 4, 25. चाध्ययनं P. U.
II. ii, 4, 27. अतः N. U.

## २. २. ५.

सर्वविद्यानामप्युपनिषदामुपाकृत्यानध्ययनं तदहः ॥ १ ॥

अधीत्य चाविप्रक्रमणँ सद्यः ॥ २ ॥

यदि त्वरेत गुरोः समीक्षाया स्वाध्यायमधीत्य कामं गच्छेत् । एवमुभयोः शिवं भवति ॥ ३ ॥

समावृत्तं चेदाचार्योऽभ्यागच्छेत्तमभिमुखोऽभ्यागम्य तस्योपसंगृह्य न बीभत्समान उदकमुपस्पृश्य पुरस्कृत्योपस्थाप्य यथोपदेशं पूजयेत् ॥ ४ ॥

आसने शयने भक्ष्ये भोज्ये वाससि वा संनिहिते निहीनतरवृत्तिः स्यात् ॥ ५ ॥

तिष्ठन्सव्येन पाणिनानुगृह्याचार्यमाचामयेत् ॥ ६ ॥

अन्यं वा समुदेतम् ॥ ७ ॥

स्थानासनचङ्क्रमणस्मितेष्वनुचिकीर्षन् ॥ ८ ॥

संनिहिते मूत्रपुरीषवातकर्मोच्चैर्भाषाहासष्ठीवनदन्तस्कवननिःश्रृङ्खणभ्रुक्षेपणतालनिष्ठ्यानीति ॥ ९ ॥

दारे प्रजायां चोपस्पर्शनभाषा विस्रम्भपूर्वाः परिवर्जयेत् ॥ १० ॥

---

II. ii, 5, 2. वा P. U.; N. U. Haradatta states, that the usual reading is अविप्रक्रिमणम् । प्रायेण मकारात्पूर्वमिकारमधीयते । तत्राप्येष एवार्थः । इकारस्तु च्छान्दसोऽपपाठो वा ॥

II. ii, 5, 4. तदातमाभि° P. U. Text.

II. ii. 5, 5. भोज्ये om. P. U.

II. ii, 5, 6. आचमयेत् P. U.; both Text and Com.; P.; N.

II. ii, 5, 8. स्थितेष्व° P. sec. m.; N.

II. ii, 5, 9. मूत्रपुरीषयोः Md. निशृंखण P.; P. U.; Md. भ्रूक्षेपण P.; P. U. sec. m.; भूक्षेपण N. भ्रूविक्षेपण Md. But the Com. भ्रुक्षेपणं भ्रूविक्षेः । छान्दसो ह्रस्वः ॥ ताडनं Md.; N.

II. ii, 5, 10. संभाषा P. U.

वाक्येन वाक्यस्य प्रतिघातमाचार्यस्य वर्जयेत् ॥ ११ ॥
श्रेयसां च ॥ १२ ॥
सर्वभूतपरिवादाक्रोशांश्च ॥ १३ ॥
विद्यया च विद्यानाम् ॥ १४ ॥
यया विद्यया न विरोचेत पुनराचार्यमुपेत्य नियमेन साधयेत् ॥ १५ ॥
उपाकरणाद्योत्सर्जनादध्यापयितुर्नियमः । लोमसंहरणं माँसं श्राद्धं मैथुनमिति च वर्जयेत् ॥ १६ ॥
ऋत्वे वा जायाम् ॥ १७ ॥
यथागमं शिष्येभ्यो विद्यासंप्रदाने नियमेषु च युक्तः स्यात् । एवं वर्तमानः पूर्वापरान्संबन्धानात्मानं च क्षेमे युनक्ति ॥ १८ ॥
मनसा वाचा घ्राणेन चक्षुषा श्रोत्रेण त्वक्शिश्नोदरारम्भणानाश्रावान्परिवृञ्जानोमृतत्वाय कल्पते ॥ १९ ॥ ५ ॥

॥ इत्यापस्तम्बीयधर्मसूत्रे द्वितीये प्रश्ने द्वितीयः पटलः समाप्तः॥

जात्याचारसंशये धर्मार्थमागतमग्निमुपसमाधाय जातिमाचारं च पृच्छेत् ॥ १ ॥

---

II. ii, 5, 11. प्रतीघातं P. U.; Md. P. U. joins Sútras 11 and 12.

II. ii, 5, 13. परीवादा° P. U.; Md.

II. ii, 5, 16. संहारणं N. U.; P. sec. m. संऽहरणं P. U. Text and Com.

II. ii, 5, 17. जायामुपेयात् P.; P. U. ऋत्वे, see the Com.

II. ii, 5, 18. आगमनं Md.; पूर्वापरान्त्सं P.; N.; N. U.

II. ii, 5, 19. घ्राणेन Md.; P. sec. m.; N. U. आस्त्रावान् P. sec. m.; N.; N. U.; N. U. Com. आस्त्रावानो.

II. iii, 6, 1. N. U. and P. divide this Sútra into two, beginning the second with जातिम्.

साधुतां चेत्प्रतिजानीतेऽग्निरुपद्रष्टा वायुरुपश्रोतादित्योऽनुख्याता साधुतां प्रतिजानीते साध्वस्मा अस्तु वितथ एष एनस इत्युक्त्वा शास्तुं प्रतिपद्येत ॥ २ ॥

अग्निरिव ज्वलन्नतिथिरभ्यागच्छति ॥ ३ ॥

धर्मेण वेदानामेकैकाँ शाखामधीत्य श्रोत्रियो भवति ॥ ४ ॥

स्वधर्मसंयुक्तं कुटुम्बिनमभ्यागच्छति धर्मपुरस्कारो नान्यप्रयोजनः सोऽतिथिर्भवति ॥ ५ ॥

तस्य पूजायाँ शान्तिः स्वर्गश्च ॥ ६ ॥

तमभिमुखोऽभ्यागम्य यथावयः समेत्य तस्यासनमाहारयेत् ॥ ७ ॥

शक्तिविषये नाबहुपादमासनं भवतीत्येके ॥ ८ ॥

तस्य पादौ प्रक्षालयेत् । शूद्रमिथुनावित्येके ॥ ९ ॥

अन्यतरोऽभिषेचने स्यात् ॥ १० ॥

तस्योदकमाहारयेन्मृन्मयेनेत्येके ॥ ११ ॥

नोदकमाहारयेदसमावृत्ते ॥ १२ ॥

अध्ययनसांवृत्तिश्चात्राधिका ॥ १३ ॥

सान्त्वयित्वा तर्पयेद्रसैर्भक्ष्यैरद्भिरवरार्ध्येनेति ॥ १४ ॥

---

II. iii, 6, 2. साधुतां प्रतिजानते Md.; N. U. °तां चेत्प्रतिजानीते P. U. विदथः Md.; N. U. प्रशातुम् P. sec. m.

II. iii, 6, 3. अग्निं परिज्वलन् Md. But see the Com.

II. iii, 6, 5. स्वधर्मयुक्तं Md.; N. U. Text and Com.; N.

II. iii, 6, 7. आहरयेत् P. pr. m.; P. U.; P. and N. U. divide this Sútra, beginning the second with तस्य.

II. iii, 6, 11. आहरयेत् P. pr. m. आहरेत् P. U.

II. iii, 6, 12. आहरयेत् P. pr. m.; P. U. °समावृत्तो Md.; P. °समावृत्तः P. U. °समावृत्ते: N. U. But see the Com.

II. iii, 6, 13. अध्ययनात्संवृत्तिः N. U. अध्ययनासांविधिः [वृत्तिः sec. m.] ... अधिकः Md. अध्ययनासां वृत्तिः P. sec. m. The reading अध्ययनासांवृत्तिः is noticed by Haradatta; see the Com.

आवसथं दद्यादुपरिशय्यामुपस्तरणमुपधानं सावस्तरणमभ्यञ्जनं चेति ॥ १५ ॥

अन्नसँस्कर्तारमाहूय व्रीहीन्यवान्वा तदर्थान्निर्वपेत् ॥ १६ ॥

उद्धृतान्यन्नान्यवेक्षेतेदं भूया ३ इदा ३ मिति ॥ १७ ॥

भूय उद्धरेत्येव ब्रूयात् ॥ १८ ॥

द्विषन्द्विषतो वा नान्नमश्नीयाद्दोषेण वा मीमाँसमानस्य मीमाँसितस्य वा ॥ १९ ॥

पाप्मानं हि स तस्य भक्षयतीति विज्ञायते ॥ २० ॥ ६ ॥

२. ३. ७.

स एष प्राजापत्यः कुटुम्बिनो यज्ञो नित्यप्रततः ॥ १ ॥

येतिथीनामग्निः स आहवनीयो यः कुटुम्बे स गार्हपत्यो यस्मिन्पच्यते सोन्वाहार्यपचनः ॥ २ ॥

ऊर्जं पुष्टिं प्रजां पशूनिष्टापूर्तमिति गृहाणामश्नाति यः पूर्वोतिथेरश्नाति ॥ ३ ॥

पयउपसेचनमन्नमग्निष्टोमसंमितँ सर्पिषोक्थ्यसंमितं मधुनातिरात्रसंमितं मांसेन द्वादशाहसंमितमुदकेन प्रजावृद्धिरायुषश्च ॥ ४ ॥

प्रिया अप्रियाश्चातिथयः स्वर्गं लोकं गमयन्तीति विज्ञायते ॥ ५ ॥

स यत्प्रातर्मध्यंदिने सायमिति ददाति सवनान्येव तानि भवन्ति ॥ ६ ॥

---

II. iii, 6, 15. उपरिशय्यायाः Md. उपरिशय्यादु° N. अभ्यञ्जने च P.

II. iii, 6, 17. इदामिति Md.; अवेक्षते P. U.

II. iii, 6, 19. P. U. joins this Sûtra with the following.

II. iii, 7, 4. अन्नं om. Md.

II. iii, 7, 5. अभिप्रियाश्च P. U. Text and Com. But the भि is probably a faulty repetition of the प्रि.

यदनूत्तिष्ठत्युदवस्यत्येव तत् ॥ ७ ॥

यत्सान्वयति सा दक्षिणा प्रशँसा ॥ ८ ॥

यत्सँसाधयति ते विष्णुक्रमाः ॥ ९ ॥

यदुपावर्तते सोवभृथः ॥ १० ॥

इति ब्राह्मणम् ॥ ११ ॥

राजानं चेदतिथिरभ्यागच्छेच्छ्रेयसीमस्मै पूजामात्मनः कारयेत् ॥ १२ ॥

अहिताग्निं चेदतिथिरभ्यागच्छेत्स्वयमेनमभ्युदेत्य ब्रूयात् । व्रात्य क्वावात्सीरिति । व्रात्य उदकमिति । व्रात्य तर्पयँस्त्विति॥१३॥

पुराग्निहोत्रस्य होमादुपाँशु जपेत् । व्रात्य यथा ते मनस्तथास्त्विति- व्रात्य यथा ते वशस्तथास्त्विति । व्रात्य यथा ते प्रियं तथास्त्विति । व्रात्य यथा ते निकामस्तथास्त्विति ॥ १४ ॥

यस्योद्धृतेष्वहुतेष्वग्निष्वतिथिरभ्यागच्छेत्स्वयमेनमभ्युदेत्य ब्रूयात् । व्रात्य अतिसृज होष्यामि । इत्यतिसृष्टेन होतव्यम् । अनतिसृष्टश्चेज्जुहुयाद्दोषं ब्राह्मणमाह ॥ १५ ॥

एकरात्रं चेदतिथीन्वासयेत्पार्थिवाँल्लोकानभिजयति द्वितीययान्तरिक्ष्याँस्तृतीयया दिव्याँश्चतुर्थ्या परावतो लोकानपरिमिताभिरपरिमिताँल्लोकानभिजयतीति विज्ञायते ॥ १६ ॥

असमुदेतश्चेदतिथिर्ब्रुवाण आगच्छेदासनमुदकमन्नँ श्रोत्रियाय ददामीत्येव दद्यात् । एवमस्य समृद्धं भवति ॥ १७॥ ७ ॥

॥इत्यापस्तम्बीयधर्मसूत्रे द्वितीये प्रश्ने तृतीयः पटलः समाप्तः॥

---

II. iii, 7, 7. अनुत्तिष्ठति P. U. अनुतिष्ठति P. sec. m.; Md. The latter reading is the common one, according to Haradatta : प्रायेणोत्त्छब्दं शिष्टा न पठन्ति । केवलमनुशब्दं पठन्ति ॥

II. iii, 7, 11. ब्राह्मणं च Md.

II. iii, 7, 13. तर्पयँस्त्विति P. Regarding form see the Com.

II. iii, 7, 17. असमुदितः Md. अतिथिब्रुवाणः Md.; N. U.; अतिथिं ब्रुवाणः P. U. Text and Com.

२. ४. ८.

येन कृतावसथः स्याद्तिथिर्न तं प्रत्युत्तिष्ठेत्प्रत्यवरोहेद्वा पुरस्ताच्चेदभिवादितः ॥ १ ॥
शेषभोज्यतिथीनाँ स्यात् ॥ २ ॥
न रसान्गृहे भुञ्जीतानवशेषमतिथिभ्यः ॥ ३ ॥
नात्मार्थमभिरूपमन्नं पाचयेत् ॥ ४ ॥
गोमधुपर्कार्हो वेदाध्यायः ॥ ५ ॥
आचार्य ऋत्विक्स्नातको राजा वा धर्मयुक्तः ॥ ६ ॥
आचार्यायर्त्विजे श्वशुराय राज्ञ इति परिसंवत्सरादुपतिष्ठद्भ्यो गौर्मधुपर्कश्च ॥ ७ ॥
दधि मधुसँसृष्टं मधुपर्कः पयो वा मधुसँसृष्टम् ॥ ८ ॥
अभाव उदकम् ॥ ९ ॥
षडङ्गो वेदः ॥ १० ॥
छन्दःकल्पो व्याकरणं ज्योतिषं निरुक्तं शीक्षा छन्दोविचितिरिति ॥ ११ ॥
शब्दार्थारम्भणानां तु कर्मणाँ समाम्नायसमाप्तौ वेदशब्दः। तत्र संख्या विप्रतिषिद्धा ॥ १२ ॥
अङ्गानां तु प्रधानैरव्यपदेश इति न्यायवित्समयः ॥ १३ ॥
अतिथिं निराकृत्य यत्रगते भोजने स्मरेत्ततो विरम्योपोष्य ॥१४॥
॥ ८ ॥

---

II. iv, 8, 1. °आवसथस्यात् P.

II. iv, 8, 2. शेषेभोजी P.; P. U.

II. iv, 8, 7. °मधुपर्क इति P. U.

II. iv, 8, 11. शिक्षा P.; P. U.; but see the Com. ज्योतिषं P. U. Text and Com.; N.

II. iv, 8, 14. अतिथीन् Md.

२. ४. ९.

श्वोभूते यथामनसं तर्पयित्वा संसाधयेत् ॥ १ ॥
यानवन्तमा यानात् ॥ २ ॥
यावन्नानुजानीयादितरः ॥ ३ ॥
अप्रतीभायां सीम्नो निवर्तेत ॥ ४ ॥
सर्वान्वैश्वदेवे भागिनः कुर्वीता श्वचण्डालेभ्यः ॥ ५ ॥
नानर्हद्भ्यो दद्यादित्येके ॥ ६ ॥
उपेतः स्त्रीणामनुपेतस्य चोच्छिष्टं वर्जयेत् ॥ ७ ॥
सर्वाण्युदकपूर्वाणि दानानि ॥ ८ ॥
यथाश्रुति विहारे ॥ ९ ॥
ये नित्यभाक्तिकास्तेषामनुपरोधेन संविभागो विहितः ॥ १० ॥
काममात्मानं भार्यां पुत्रं वोपरुन्ध्यान्न त्वेव दासकर्मकरम् ॥११॥
तथा चात्मनोनुपरोधं कुर्याद्यथा कर्मस्वसमर्थः स्यात् ॥ १२ ॥
अथाप्युदाहरन्ति ।
अष्टौ ग्रासा मुनेर्भक्ष्याः षोडशारण्यवासिनः ।
द्वात्रिंशतं गृहस्थस्यापरिमितं ब्रह्मचारिणः ॥
आहिताग्निरनड्वांश्च ब्रह्मचारी च ते त्रयः ।
अश्नन्त एव सिध्यन्ति नैषां सिद्धिरनश्नतामिति ॥ १३ ॥ ९ ॥
॥ इत्यापस्तम्बीयधर्मसूत्रे द्वितीये प्रश्ने चतुर्थः पटलः समाप्तः ॥

---

II. iv, 9, 2. P. U. om. this Sútra and its Com.

II. iv, 9, 4. अप्रतिभायां P. U.; N. अप्रतिहायां N. U.; but see the Com. विवर्तेत Md.

II. iv, 9, 5. वैश्वदेवभागिनः Md.; चांडालेभ्यः P.; P. U.; N. U.

II. iv, 9, 7. उपेतस्त्रीणां N.; च वर्जयेत् N. U.

II. iv, 9, 10. नित्या भाक्तिकाः Md.; नित्या भक्तिकाः N.; N. U. Text.

II. iv, 9, 11. चोप° P. U.; P. pr. m.

II. iv, 9, 12. कर्मसु समर्थः Md.; N.; N. U.; P. sec. m.

II. iv, 9, 13. द्वात्रिंशत्तु गृहस्थस्यामितं Md. After these two S'lokas N. U., Md. add a third: गृहस्थो ब्रह्मचारी वा योनश्नँस्तपश्चरेत् । प्राणाग्निहोत्रलोपेनावकीर्णी भवेत्तु सः ॥ It is not mentioned in the Com. and follows after the इति.

२. ५. १०.

भिक्षणे निमित्तमाचार्यो विवाहो यज्ञो मातापित्रोर्बुभूर्षार्हतश्च नियमविलोपः ॥ १ ॥

तत्र गुणान्समीक्ष्य यथाशक्ति देयम् ॥ २ ॥

इन्द्रियप्रीत्यर्थस्य तु भिक्षणमनिमित्तम् । न तदाद्रियेत ॥ ३ ॥

स्वकर्म ब्राह्मणस्याध्ययनमध्यापनं यज्ञो याजनं दानं प्रतिग्रहणं दायाद्यं शिलोञ्छः ॥ ४ ॥

अन्यच्चापरिगृहीतम् ॥ ५ ॥

एतान्येव क्षत्रियस्याध्यापनयाजनप्रतिग्रहणानीति परिहाप्य दण्डयुद्धाधिकानि ॥ ६ ॥

क्षत्रियवद्वैश्यस्य दण्डयुद्धवर्जं कृषिगोरक्ष्यवाणिज्याधिकम् ॥७॥

नाननूचानमृत्विजं वृणीते न पणमानम् ॥ ८ ॥

अयाज्योनधीयानः ॥ ९ ॥

युद्धे तद्योगा यथोपायमुपदिशन्ति तथा प्रतिपत्तव्यम् ॥ १० ॥

न्यस्तायुधप्रकीर्णकेशप्राञ्जलिपराङ्गावृत्तानामार्या वधं परिचक्षते ॥ ११ ॥

शास्त्रैरधिगतानामिन्द्रियदौर्बल्याद्विप्रतिपन्नानां शास्ता निर्वेशमुपदिशेद्यथाकर्म यथोक्तम् ॥ १२ ॥

तस्य चेच्छास्त्रमतिवर्तेरन्राजानं गमयेत् ॥ १३ ॥

---

II. v, 10, 1. बुभूषा Md.; N.; P.; P. U.; but the Com. भर्तुमिच्छा पोषणेच्छा·—यज्ञः om. N. U.; नियमलोपः N. U. विवाहो om. P. U.

II. v, 10, 4. प्रदानं P. U.

II. v, 10, 7. गोरक्ष P. U. Text; N.; Md.; but see the Com.

II. v, 10, 11. न्यस्तायुधः प्रकीर्णकेशः प्राञ्जलिः N. U. Haradatta blames these readings : न्यस्तायुध : प्रकीर्णकेश इति विसर्जनीयं केचित्पठन्ति । सोपपाठः । पराङ्गावृत्त इति ङकारश्छान्दसः ॥

II. v, 10, 12. निर्वेषं N. U.; P. sec. m.; Md.

राजा पुरोहितं धर्मार्थकुशलम् ॥ १४ ॥

स ब्राह्मणान्नियुञ्ज्यात् ॥ १५ ॥

बलविशेषेण वधदास्यवर्जं नियमैरुपशोषयेत् ॥ १६ ॥ १० ॥

२. ५. ११.

इतरेषां वर्णानामा प्राणविप्रयोगात्समवेक्ष्य तेषां कर्माणि राजा दण्डं प्रणयेत् ॥ १ ॥

न च संदेहे दण्डं कुर्यात् ॥ २ ॥

सुविचितं विचित्या दैवप्रश्नेभ्यो राजा दण्डाय प्रतिपद्येत ॥ ३ ॥

एवंवृत्तो राजोभौ लोकावभिजयति ॥ ४ ॥

राज्ञः पन्था ब्राह्मणेनासमेत्य ॥ ५ ॥

समेत्य तु ब्राह्मणस्यैव पन्थाः ॥ ६ ॥

यानस्य भाराभिनिहितस्यातुरस्य स्त्रिया इति सर्वैर्दातव्यः ॥ ७ ॥

वर्णज्यायसां चेतरैर्वर्णैः ॥ ८ ॥

अशिष्टपतितमत्तोन्मत्तानामात्मस्वस्त्ययनार्थेन सर्वैरेव दातव्यः ॥ ९ ॥

धर्मचर्यया जघन्यो वर्णः पूर्वंपूर्वं वर्णमापद्यते जातिपरिवृत्तौ ॥ १० ॥

अधर्मचर्यया पूर्वो वर्णो जघन्यंजघन्यं वर्णमापद्यते जातिपरिवृत्तौ ॥ ११ ॥

धर्मप्रजासंपन्ने दारे नान्यां कुर्वीत ॥ १२ ॥

अन्यतराभावे कार्या प्रागग्न्याधेयात् ॥ १३ ॥

आधाने हि सती कर्मभिः संबध्यते येषामेतदङ्गम् ॥ १४ ॥

---

II. v, 10, 14. शास्त्रकुशलं P. U. पुरोहितं om. P. pr. m.

II. v, 10, 16. अवशोषयेत् P. U.

II. v, 11, 3. विचिन्त्या Md. दैवे° Md.

II. v. 11, 11. अधर्मपरिचर्यया Md.

II. v, 11, 13. °भावेपि N. U.

II. v, 11, 14. सति P. U.; N.; but see the Com.

सगोत्राय दुहितरं न प्रयच्छेत् ॥ १५ ॥
मातुश्च योनिसंबन्धेभ्यः ॥ १६ ॥
ब्राह्मे विवाहे बन्धुशीलश्रुतारोग्याणि बुध्द्वा प्रजाँ सहत्वकर्मभ्यः प्रतिपादयेच्छक्तिविषयेणालंकृत्य ॥ १७ ॥
आर्षे दुहितृमते मिथुनौ गावौ देयौ ॥ १८ ॥
दैवे यज्ञतन्त्र ऋत्विजे प्रतिपादयेत् ॥ १९ ॥
मिथः कामात्सांवर्तेते स गान्धर्वः ॥ २० ॥ ११ ॥

२. ५. १२.

शक्तिविषयेण द्रव्याणि दत्त्वा वहेरन्स आसुरः ॥ १ ॥
दुहितृमतः प्रोथयित्वा वहेरन्स राक्षसः ॥ २ ॥
तेषां त्रय आद्याः प्रशस्ताः पूर्वःपूर्वः श्रेयान् ॥ ३ ॥
यथा युक्तो विवाहस्तथा युक्ता प्रजा भवति ॥ ४ ॥
पाणिसमूढं ब्राह्मणस्य नाप्रोक्षितमभितिष्ठेत् ॥ ५ ॥
अग्निं ब्राह्मणं चान्तरेण नातिक्रामेत् ॥ ६ ॥

---

II. v, 11, 17. प्रजासहत्व° Md.; P.; N.; N. U. Text. This reading is also noticed by the Com. शक्तिविषये हेम्ना Md.

II. v, 11, 19. Md. inserts after this Sútra: सहधर्मं चरत इति प्राजापत्ये । But this is an interpolation, from As'valáyana, see II. v, 12, 3.

II. v, 11, 20. संवर्तेते P. U. Text; Md.; but Haradatta: समो दीर्घः पूर्ववत् ।

II. v, 12, 1. °विषये P. U.; Md.

II. v, 12, 2. Md. inserts after this Sútra: सुप्तानां प्रमत्तानां प्रमत्तानां वा वहेरन्स पैशाचः । This is likewise an interpolation from As'valáyana.

II. v, 12, 4. युक्ताः प्रजा भवन्ति P. U. After this Sútra Md. and N. U. Text, add: नान्येन होतव्यमन्यहोमे तु तस्य संबन्धः । [होमेन तु सं° N. U.] अनुद्राहिता तु या कन्यार्तवेन युज्यते सा वृषली । योन्यपूर्वामुद्वहते सा पुनर्भूरिति ॥ These Sútras are not noticed in the Com., and probably interpolated, as otherwise Haradatta would have quoted the last to II. vi, 13, 1.

II. v, 12, 6. अतिक्रमेत् P.; P. U.

ब्राह्मणांश्च ॥ ७ ॥

अनुज्ञाप्य वातिक्रामेत् ॥ ८ ॥

अग्निमपश्च न युगपद्धारयीत ॥ ९ ॥

नानाग्नीनां च संनिवापं वर्जयेत् ॥ १० ॥

प्रतिमुखमग्निमाह्रियमाणं नाप्रतिष्ठितं भूमौ प्रदक्षिणीकुर्यात् ॥ ११ ॥

पृष्ठतश्चात्मनः पाणी न संश्लेषयेत् ॥ १२ ॥

स्वपन्नभिनिम्रुक्तोनाश्वान्वाग्यतो रात्रिमासीत । श्वोभूत उदकमुपस्पृश्य वाचं विसृजेत् ॥ १३ ॥

स्वपन्नभ्युदितोनाश्वान्वाग्यतोहस्तिष्ठेत् ॥ १४ ॥

आ तमितोः प्राणमायच्छेदित्येके ॥ १५ ॥

स्वप्नं वा पापकं दृष्ट्वा ॥ १६ ॥

अर्थं वा सिषाधयिषुः ॥ १७ ॥

नियमातिक्रमे वान्यस्मिन् ॥ १८ ॥

दोषफलसंशये न तत्कर्तव्यम् ॥ १९ ॥

एवमध्यायानध्याये ॥ २० ॥

न संशये प्रत्यक्षवद्ब्रूयात् ॥ २१ ॥

अभिनिम्रुक्ताभ्युदितकुनखिश्यावदाग्रेदिधिषुदिधिषूपतिपर्याहितपरीष्टपरिवित्तपरिविन्नपरिविविदानेषु चोत्तरोत्तरस्मिन्नशुचिकरनिर्वेशो गरीयान्गरीयान् ॥ २२ ॥

---

II. v, 12, 7. N. U. joins Sútras 7 and 8.

II. v, 12, 8. अतिक्रमेत P.; P. U.

II. v, 12, 13. अभिनिमुक्तो. P. pr. m., and N. pr. m. अभिनिर्मुक्तो P. U. Text, N. U. P. U. joins Sútras 13 and 14.

II. v, 12, 17. सिसाध° P. U.; सिसाधयिष्यं P. sec. m., सिसाधयिषन् Md. सिषाधयिषन् N.

II. v, 12, 22. अभिनिर्मुक्तः N. U.; P. U. कुनखी Md.; N. U.; P.; N., but no note in the Com. श्यावदद° Md.; P. sec. m.; N. U.; but see the Com. तकारलोपश्छान्दसः । अग्रदिधिषु. Md.; N.; P. पर्याधातृ पर्याहित P. U., see the Com. परियष्टृपरीष्ट P. U., but see the Com. निर्वेषो N. U.; Md. निर्वेष्टो P.

तच्च लिङ्गं चारित्वोद्वार्यमित्येके ॥ २३ ॥ १२ ॥

॥ इत्यापस्तम्बीयधर्मसूत्रे द्वितीये प्रश्ने पञ्चमः पटलः समाप्तः ॥

सवर्णापूर्वशास्त्रविहितायां यथर्तु गच्छतः पुत्रास्तेषां कर्मभिः संबन्धः ॥ १ ॥

दायेन ॥ २ ॥

अव्यतिक्रमश्चोभयोः ॥ ३ ॥

पूर्ववत्यामसंस्कृतायां वर्णान्तरे च मैथुने दोषः ॥ ४ ॥

तत्रापि दोषवान्पुत्र एव ॥ ५ ॥

उत्पादयितुः पुत्र इति हि ब्राह्मणम् ॥ ६ ॥

अथाप्युदाहरन्ति ।

इदानीमेवाहं जनकः स्त्रीणामीर्ष्यामि नो पुरा
यदा यमस्य सादने जनयितुः पुत्रमब्रुवन् ॥
रेतोधाः पुत्रं नयति परेत्य यमसादने ।
तस्माद्भार्यां रक्षन्ति बिभ्यन्तः पररेतसः ॥
अप्रमत्ता रक्षथ तन्तुमेतं मा वः क्षेत्रे परबीजानि वाप्सुः ।
जनयितुः पुत्रो भवति सांपराये मोघं वेत्ता कुरुते तन्तुमेतमिति ॥ ७ ॥

दृष्टो धर्मव्यतिक्रमः साहसं च पूर्वेषाम् ॥ ८ ॥

तेषां तेजोविशेषेण प्रत्यवायो न विद्यते ॥ ९ ॥

---

II. v, 12, 23. एके om. Md.

II. vi, 13, 2. P. U. unites Sútras 2 and 3.

II. vi, 13, 4. मैथुने च Md.

II. vi, 13. 7. यदा om. P. U. Text. °तु पुत्रम° P.; पुत्रं जनयति P. U.; Md.; P. pr. m.; यमस्य सा° P. U.; भार्या रिरक्षन्ति P. U. Text. भार्या संरक्षंति. N. U. sec. m. रक्षयत P. U.; Text; मोघंते वेत्था P. U. Text. वेत्था. P. pr. m.; बिभ्यन्तः see the Com.

II. vi, 13, 8. °क्रमसा°. P.

II. vi, 13, 9. तेषां तेषां N. तेषां om. Md. दृश्यते P. U.

तदन्वीक्ष्य प्रयुञ्जानः सीदत्यवरः ॥ १० ॥

दानं क्रयधर्मश्चापत्यस्य न विद्यते ॥ ११ ॥

विवाहे दुहितृमते दानं काम्यं धर्मार्थँ श्रूयते तस्माद्दुहितृमतेऽधिरथँ शतं देयं तन्मिथुया कुर्यादिति । तस्यां क्रयशब्दः सँस्तुतिमात्रम् । धर्माद्धि संबन्धः ॥ १२ ॥

एकधनेन ज्येष्ठं तोषयित्वा ॥ १३ ॥ १३ ॥

२. ६. १४.

जीवन्पुत्रेभ्यो दायं विभजेत्समं क्लीबमुन्मत्तं पतितं च परिहाप्य ॥ १ ॥

पुत्राभावे यः प्रत्यासन्नः सपिण्डः ॥ २ ॥

तदभाव आचार्य आचार्याभावेऽन्तेवासी हृत्वा तदर्थेषु धर्मकृत्येषु वोपयोजयेत् ॥ ३ ॥

दुहिता वा ॥ ४ ॥

सर्वाभावे राजा दायँ हरेत् ॥ ५ ॥

ज्येष्ठो दायाद इत्येके ॥ ६ ॥

देशविशेषे सुवर्णं कृष्णा गावः कृष्णं भौमं ज्येष्ठस्य ॥ ७ ॥

रथः पितुः परिभाण्डं च गृहे ॥ ८ ॥

---

II. vi, 13, 10. N. U. omits the Sútra, but has the avatarana. अनुवीक्ष्य Md.

II. vi, 13, 12. रथशतं P. U. Text. रथं शतं P. pr. m. अतिरथं N. U. Text; P. sec. m.; Md. धर्मार्थसंबन्धः P.; P. U. Text.

II. vi, 13, 13. ज्येष्ठं हि Md.

II. vi, 14, 2. पतितं om. N. U.; च om. P. U.

II. vi, 14, 3. P. U. leaves out the beginning of the Sútra up to तदर्थेषु. चोपयोजयेत् N. U. Text and Com.

II. vi, 14, 5. हरेत Md.

II. vi, 14, 6. दायहर P.; P. U.

II. vi, 14, 8. परीभाण्डं Md.

अलंकारो भार्याया ज्ञातिधनं चेत्येके ॥ ९ ॥
तच्छास्त्रैर्विप्रतिषिद्धम् ॥ १० ॥
मनुः पुत्रेभ्यो दायं व्यभजदित्यविशेषेण श्रूयते ॥ ११ ॥
अथापि तस्माज्ज्येष्ठं पुत्रं धनेन निरवसाययन्तीत्येकवच्छ्रूयते ॥ १२ ॥
अथापि नित्यानुवादमविधिमाहुर्न्यायविदो यथा तस्मादजावयः पशूनाँ सहचरन्तीति । तस्मात्स्नातकस्य मुखँ रेभायतीव । तस्माद्बस्तश्च श्रोत्रियश्च स्त्रीकामतमाविति ॥ १३ ॥
सर्वे हि धर्मयुक्ता भागिनः ॥ १४ ॥
यस्त्वधर्मेण द्रव्याणि प्रतिपादयति ज्येष्ठोपि तमभागं कुर्वीत ॥ १५ ॥
जायापत्योर्न विभागो विद्यते । पाणिग्रहणाद्धि सहत्वं कर्मसु ॥ १६ ॥
तथा पुण्यफलेषु द्रव्यपरिग्रहेषु च ॥ १७ ॥
न हि भर्तुर्विप्रवासे स्त्रिया नैमित्तिके दाने स्तेयमुपदिशन्ति ॥ १८ ॥ १४ ॥

२. ६. १५.

एतेन देशकुलधर्मा व्याख्याताः ॥ १ ॥
मातुश्च योनिसंबन्धेभ्यः पितुश्चा सप्तमात्पुरुषात् ॥ २ ॥

---

II. vi, 14, 12. तथापि Md.

II. vi, 14, 13. रेफायतीव Md.; N.

II. vi, 14, 15. द्रव्याणि om. P. U.; P. sec. m.

II. vi, 14, 16. P. U. divides this Sútra into two, beginning the second with पाणि°. भागो P. U.

II. vi, 14, 17. पुण्यक्रियासु N. U.

II. vi, 14, 18. स्त्रियाः om. Md.; P. sec. m. स्त्रियास्तेयं P. U. नैमित्तिकदाने Md. स्तेयमित्यु° N. U.

II. vi, 15, 2. P. U. joins Sútras 2—5.

यावता वा संबन्धो ज्ञायते ॥ ३ ॥
तेषां प्रेतेषूदकोपस्पर्शनम् ॥ ४ ॥
गर्भान्परिहाप्यापरिसंवत्सरान् ॥ ५ ॥
मातापितरावेव तेषु ॥ ६ ॥
हर्तारश्च ॥ ७ ॥
भार्यायां परमगुरुसँस्थायां चाकालमभोजनम् ॥ ८ ॥
आतुरव्यञ्जनानि कुर्वीरन् ॥ ९ ॥
केशान्प्रकीर्य पाँसूनोप्यैकवाससो दक्षिणामुखाः सकृदुपमज्योत्तीर्योपविशन्ति । एवं त्रिः । तत्प्रत्ययमुदकमुत्सिच्याप्रतीक्षा ग्राममेत्य यस्त्रिय आहुस्तत्कुर्वन्ति ॥ १० ॥
इतरेषु चैतदेवैक उपदिशन्ति ॥ ११ ॥

---

II. vi, 15, 3. विज्ञायते Md.

II. vi, 15, 5. N. U. om. the Text of this S.

II. vi, 15, 6. P. U. joins Sútras 6 and 7.

II. vi, 15, 8. भार्यायाः P.; °स्थायांश्चा° N.

II. vi, 15, 10. P. U. begins a new Sútra with एवं and one with तत्प्रत्ययम् । उत्तीर्य om. P. U. Text.—उत्तीर्य वासः पीडयित्वा . . . . . तिलमिश्रमुदकमुत्सिच्य N. U.; प्रत्यहं Md. After उत्सिच्य Md. interpolates the following S'lokas: विवाहे चैव निर्वृत्ते चतुर्थेहनि रात्रिषु । संध्योद्भवैस्तथा मन्त्रैरस्थिमांसत्वचैः सह॥ एकत्वं सहते भर्तुः पिण्डे गोत्रे च सूतके । तस्मादुदकपिण्डे च भर्तुगोत्रेण दीयतामिति ॥

II. vi, 15, 11—12. Between these two Sútras N. U., P. U. insert the following Sútras: ब्राह्मणश्चा [ब्राह्मणाश्च N. U]. एतस्मिन्कालेमात्याः केशश्मश्रूणि वापयन्ति । समावृत्ता न वापयेरन् । न विहारिण इत्येके । अनशनानध्ययनाधःशयनोदकोपस्पर्शनान्याकालमनूचानेषु द्व्यहं त्र्यहं षडहं द्वादशाहं वा गुरुष्वनशनवर्जं संवत्सरं मातरि पितर्याचार्य इत्येके ॥. P. pr. m. has the first three S.

The first three Sútras are commented upon, the last not. But N. U. has after it व्याख्या त्रुटितं. The Hiraṇyakes'i-Sútra has the same words, and Mahádeva gives exactly the same explanation. The last Sútra is likewise not explained and the MSS of the Hir. U. have also the mark of a lacuna. The only difference is, that the word ब्राह्मणान्, instead of ब्राह्मणश्च,

शुचीन्मन्त्रवतः सर्वकृत्येषु भोजयेत् ॥ १२ ॥
देशतः कालतः शौचतः सम्यक्प्रतिगृहीतृत इति दानानि प्रतिपादयति ॥ १३ ॥
यस्याग्नौ न क्रियते यस्य चाग्रं न दीयते न तद्भोक्तव्यम् ॥१४॥
न क्षारलवणहोमो विद्यते ॥ १५ ॥
तथावरान्नसँसृष्टस्य च ॥ १६ ॥
अहविष्यस्य होम उदीचीनमुष्णं भस्मापोह्य तस्मिञ्जुहुयात्तद्धुतमहुतं चाग्नौ भवति ॥ १७ ॥

---

stands after एके, at the end of Sútra 5, and forms part of II. vi, 15, 12. This is, of course, the correct position. I am inclined to assume that the above-mentioned Sútras given by P. pr. m.; P. U.; N. U. are taken from the Hir. S. For, firstly, in other passages also P. U., and N. U. have been corrected from a MSS. of the Hir. S., and of its Bháshya, *e.g.* see crit. notes to II. vii, 16, 4; vii, 16, 12. Secondly, the word विहारिणः which the Com. explains by बालाः, is against A'pastamba's use. In the other passages where it or its simplex occurs, it means 'engaged in a sacrifice,' and विहारः 'sacrifice.' Further the Sútra न समावृत्ता वापयेरन् is directly opposed to I. iii, 10, 7, and one would expect, that Haradatta would say something about the discrepancy.

The interpolation must have been a double one. It would seem that first ब्राह्मणान् was placed before शुचीन् (श्र=श्छ), and that afterwards a second corrector inserted the four Sútras between the two words. If this supposition is correct, it would follow that P.; P. U.; N. U. are derived from one codex archetypus.

II. vi, 15, 13. शौचतश्च Md.

II. vi, 15, 14. यस्याग्रं N. U.; P. pr. m.; P. U. leaves out the Com. on this Sútra, and combines it with the next two. अग्नौ दीयते P. U.

II. vi, 15, 16. तथापरान्न° P. U.; N. U.

II. vi, 15, 17. अहविष्यस्य om. Md. P. U. makes two Sútras, ending the first with तद्धु (तद्धुतम्).

न स्त्री जुहुयात् ॥ १८ ॥

नानुपेतः ॥ १९ ॥

आन्नप्राशनाद्गर्भा नाप्रयता भवन्ति ॥ २० ॥

आ परिसंवत्सरादित्येके ॥ २१ ॥

यावता वा दिशो न प्रजानीयुः ॥ २२ ॥

ओपनयनादित्यपरम् ॥ २३ ॥

अत्र ह्यधिकारः शास्त्रैर्भवति ॥ २४ ॥

सा निष्ठा ॥ २५ ॥

स्मृतिश्च ॥ २६ ॥ १५ ॥

॥ इत्यापस्तम्बीयधर्मसूत्रे द्वितीये प्रश्ने षष्ठः पटलः समाप्तः ॥

सह देवमनुष्या अस्मिँल्लोके पुरा बभूवुः । अथ देवाः कर्मभिर्दिवं जग्मुरहीयन्त मनुष्याः । तेषां ये तथा कर्माण्यारभन्ते सह देवैर्ब्रह्मणा चामुष्मिँल्लोके भवन्ति । अथैतन्मनुः श्राद्धशब्दं कर्म प्रोवाच ॥ १ ॥

प्रजानिःश्रेयसा च ॥ २ ॥

तत्र पितरो देवता ब्राह्मणास्त्वाहवनीयार्थे ॥ ३ ॥

मासिमासि कार्यमपरपक्षस्य ॥ ४ ॥

अपराह्णः श्रेयान् ॥ ५ ॥

---

II. vi, 15, 22. जानीयुः P. U.

II. vii, 16, 2. प्रजानिश्रेयसयार्थे P. U.; प्रजानिश्रेयसाय च. P. च om. N. U. The latter reading is adopted by Haradatta, but wrongly, since that of our Text contains an old Vedic form, see the Com.

II. vii. 16, 3. ब्राह्मणस्त्वा° Md.; N.; P. pr. m.

II. vii, 16, 4. मासि P. pr. m. मासि श्राद्धमपरपक्षस्योत्तरेऽहनि P. U. This is a corruption of the Hir. S.'s reading. P. U. gives also Mahádeva's Com. instead of Haradatta's.

II. vii, 16, 5. This Sútra is left out in P. U. अपराह्णश्रेयान् P.

तथापरपक्षस्य जघन्यान्यहानि ॥ ६ ॥
सर्वेष्वेवापरपक्षस्याहस्सु क्रियमाणे पितॄन्प्रीणाति ।
कर्तुस्तु कालाभिनियमात्फलविशेषः ॥ ७ ॥
प्रथमेऽहनि क्रियमाणे स्त्रीप्रायमपत्ये जायते ॥ ८ ॥
द्वितीयेस्तेनाः ॥ ९ ॥
तृतीये ब्रह्मवर्चसिनः ॥ १० ॥
चतुर्थे क्षुद्रपशुमान् ॥ ११ ॥
पञ्चमे पुमांसः । बहुपत्यो न चानपत्यः प्रमीयते ॥ १२ ॥
षष्ठेध्वशीलोक्षशीलश्च ॥ १३ ॥
सप्तमे कर्षे राद्धिः ॥ १४ ॥
अष्टमे पुष्टिः ॥ १५ ॥
नवम एकखुराः ॥ १६ ॥
दशमे व्यवहारे राद्धिः ॥ १७ ॥
एकादशे कृष्णायसं त्रपुसीसम् ॥ १८ ॥
द्वादशे पशुमान् ॥ १९ ॥
त्रयोदशे बहुपुत्रो बहुमित्रो दर्शनीयापत्यः। युवमारिणस्तु भवन्ति ॥ २० ॥
चतुर्दश आयुधे राद्धिः ॥ २१ ॥

---

II. vii, 16, 6. अपर om. P. U.; P. pr. m.

II. vii, 16, 8. अपत्यं P.; N. U. Text.

II. vii, 16, 10. ब्रह्मवर्चस्विनः P. U.

II. vii, 16, 12. बहुपत्यो भव्यापत्यः P. U. Text, N. U. Text, P. pr. m.—The second word is the reading of the Hiraṇyakes'ins, and not explained by Haradatta.

II. vii, 16, 14. कर्षराद्धिः P.; P. U.

II. vii. 16, 18. °सीसं वा P. U.

II. vii, 16, 20. सदर्श° N. U. Haradatta notes a reading अयुवमारिणः.

पञ्चदशे पुष्टिः ॥ २२ ॥
तत्र द्रव्याणि तिलमाषा व्रीहियवा आपो मूलफलानि ॥ २३ ॥
स्नेहवति त्वेवान्ने तीव्रतरा पितॄणां प्रीतिर्द्राघीयाँसं च कालम् ॥ २४ ॥
तथा धर्माहृतेन द्रव्येण तीर्थे प्रतिपन्नेन ॥ २५ ॥
संवत्सरं गव्येन प्रीतिः ॥ २६ ॥
भूयाँसमतो माहिषेण ॥ २७ ॥
एतेन ग्राम्यारण्यानां पशूनां माँसं मेध्यं व्याख्यातम् ॥ २८ ॥
॥ १६ ॥

२. ७. १७.

खड्गोपस्तरणे खड्गमाँसेनात्यन्तं कालम् ॥ १ ॥
तथा शतबलेर्मत्स्यस्य माँसेन ॥ २ ॥
वार्ध्राणसस्य च ॥ ३ ॥
प्रयतः प्रसन्नमनाः सृष्टो भोजयेद्ब्राह्मणान्ब्रह्मविदो योनिगोत्रमन्त्रान्तेवास्यसंबन्धान् ॥ ४ ॥
गुणहान्यां तु परेषाँ समुदेतः सोदर्योऽपि भोजयितव्यः ॥ ५ ॥
एतेनान्तेवासिनो व्याख्याताः ॥ ६ ॥
अथाप्युदाहरन्ति ॥ ७ ॥

---

II. vii. 16, 23. व्रीहियवा om. P. U. P. and N. U. add च.

II. vii, 16, 27. भूयांसं च कालमतः N.

II. vii, 17, 1. आनन्त्यकालं N; आनन्त्यं कालं P. U. Text; Md.; P. The latter reading is mentioned by Haradatta: आनन्त्यमिति पाठे स्वार्थे ष्यञ्॥.

II. vii. 17, 2. च मत्स्यस्य Md.

II. vii, 17, 3. वार्ध्रीणस्य P. pr. m.; N.

II. vii, 17, 4. °सृष्टो P.; P. U.; but see the Com.—संबन्धान् P.

II. vii, 17, 5. गुणहानौ P. U; समुदितः N. U.; N.

संभोजनी नाम पिशाचभिक्षा नैषा पितॄन्गच्छति नोत देवान्।
इहैव सा चरति क्षीणपुण्या शालान्तरे गौरिव नष्टवत्सा ॥ ८ ॥
इहैव संभुञ्जती दक्षिणा कुलात्कुलं विनश्यतीति ॥ ९ ॥
तुल्यगुणेषु वयोवृद्धः श्रेयान्द्रव्यकृशश्चेप्सन् ॥ १० ॥
पूर्वेद्युर्निवेदनम् ॥ ११ ॥
अपरेद्युर्द्वितीयम् ॥ १२ ॥
तृतीयमामन्त्रणम् ॥ १३ ॥
त्रिःप्रायमेके श्राद्धमुपदिशन्ति ॥ १४ ॥
यथा प्रथममेवं द्वितीयं तृतीयं च ॥ १५ ॥
सर्वेषु वृत्तेषु सर्वतः समवदाय शेषस्य ग्रासावरार्ध्यं प्राश्नीया-
द्यथोक्तम् ॥ १६ ॥
उदीच्यवृत्तिस्त्वासनगतानां हस्तेषूदपात्रानयनम् ॥ १७ ॥
उध्द्रियतामग्नौ च क्रियतामित्यामन्त्रयते ॥ १८ ॥
काममुध्द्रियतां काममग्नौ च क्रियतामित्यतिसृष्ट उद्धरेज्जुहु-
याच्च ॥ १९ ॥
श्वभिरपपात्रैश्च श्राद्धस्य दर्शनं परिचक्षते ॥ २० ॥

---

II. vii, 17, 8. नो च Md. संभोजिनी P. U.; but see the Com.

II. vii, 17, 9. संभुञ्जति P. sec. m.; संभोजिनी P. U. Text pr. m.; संभुञ्जनी P. U. Com. भिक्षा P. U. Text.

II. vii, 17, 10. °वृद्धश्रेयान् P.

II. vii, 17, 11. निमन्त्रणं Md. P. U. combines Sútras 11, 12, and 13.

II. vii, 17, 15. यथा प्रथमेहनि P.U. Text.

II. vii, 17, 16. ग्रासवरार्ध्यं Md.; P. U; N.

II. vii, 17, 17. N. U. adds तिलप्रकरणं च; which words have been borrowed from the Hir. S.

II. vii, 17, 18. इत्यामन्त्रयते om. N.

श्वित्रः शिपिविष्टः परतल्पगाम्यायुधीयपुत्रः शूद्रोत्पन्नो ब्राह्मण्यामित्येते श्राद्धे भुञ्जानाः पङ्क्तिदूषणा भवन्ति ॥ २१ ॥

त्रिमधुस्त्रिसुपर्णस्त्रिणाचिकेतश्चतुर्मेधः पञ्चाग्निर्ज्येष्ठसामगो वेदाध्याय्यनूचानपुत्रः श्रोत्रिय इत्येते श्राद्धे भुञ्जानाः पङ्क्तिपावना भवन्ति ॥ २२ ॥

न च नक्तँ श्राद्धं कुर्वीत ॥ २३ ॥

आरब्धे चाभोजनमा समापनात् ॥ २४ ॥

अन्यत्र राहुदर्शनात् ॥ २५ ॥ १७ ॥

॥ इत्यापस्तम्बीयधर्मसूत्रे द्वितीये प्रश्ने सप्तमः पटलः समाप्तः ॥

विलयनं मथितं पिण्याकं मधु माँसं च वर्जयेत् ॥ १ ॥

कृष्णधान्यँ शूद्रान्नं ये चान्येनाश्यसंमताः ॥ २ ॥

अहविष्यमनृतं क्रोधं येन च क्रोधयेत् । स्मृतिमिच्छन्यशो मेधाँ स्वर्गं पुष्टिं द्वादशैतानि वर्जयेत् ॥ ३ ॥

---

II. vii, 17, 21. श्वित्रो N.; P. U. Com.; श्वित्रः om. N. U.—P. U. adds after श्वित्रः कुष्ठी सर्वविक्रयी वृषलीपती राजभृतः ।. N. U. adds after आयुधीयपुत्रः कुष्ठी वृषलीपतिः सर्वविक्रयी राजभृत्योप्रज्ञातः । The readings of N. U. and P. U. are owing to corrections according to the Hir. S.

II. vii, 17, 22. वेदाध्याप्य° N.; P. pr. m.; P. U. Text and Com. adds after श्रोत्रियः ब्रह्मदेयानुसंतानी. P. the same, pr. m.; sec. m. °संतान.—The commentator mentions the readings वेदाध्यापीति° and पञ्चाग्नी ज्येष्ठसामिकः and श्रोत्रियपुत्रः ।

II. vii, 17, 24. After 24 Md. adds अपरिमितं सर्पिः ।

II. vii, 17, 25. The Sútra, according to Haradatta, is not received by the Northerners.

II. viii, 18, 2. °धान्यं च P. U.

II. viii, 18, 3. मेधास्व° Md. पुष्टिं च Md.; P. U. begins a new S. after क्रोधयेत्, agreeing therein with Hir. Ujjv.

अधोनाभ्युपरिजान्वाच्छाद्य त्रिषवणमुदकमुपस्पृशन्ननग्निपक्व-
वृत्तिरच्छायोपगः स्थानासनिकः संवत्सरमेतद्व्रतं चरेत् । एत-
दष्टाचत्वारिँशत्संमितमित्याचक्षते ॥ ४ ॥

नित्यश्राद्धम् ॥ ५ ॥

बहिर्ग्रामाच्छुचयः शुचौ देशे सँस्कुर्वन्ति ॥ ६ ॥

तत्र नवानि द्रव्याणि ॥ ७ ॥

यैरन्नँ सँस्क्रियते येषु च भुज्यते ॥ ८ ॥

तानि च भुक्तवद्भ्यो दद्यात् ॥ ९ ॥

समुदेताँश्च भोजयेत् ॥ १० ॥

न चातद्गुणायोच्छिष्टं प्रयच्छेत् ॥ ११ ॥

एवँ संवत्सरम् ॥ १२ ॥

तेषामुत्तमं लोहेनाजेन कार्यम् ॥ १३ ॥

मानं च कारयेत्प्रतिच्छन्नम् ॥ १४ ॥

तस्योत्तरार्धे ब्राह्मणान्भोजयेत् ॥ १५ ॥

उभयान्पश्यति ब्राह्मणाँश्च भुञ्जानान्माने च पितृनित्युपदि-
शन्ति ॥ १६ ॥

कृताकृतमत ऊर्ध्वम् ॥ १७ ॥

---

II. viii, 18. 4. °च्छायोपकः P. sec. m. °च्छायोपगत° N. U. °पगस्थ° N.; P. U.; Md. °स्पर्शन् P. U.

II. viii, 18, 6. कुर्वन्ति P.

II. viii, 18, 8. च om. P. U.

II. viii, 18, 10. समुदितांश्च P. U.

II. viii, 18, 13. लौहेनाजेन वा N. U.

II. viii, 18, 15. N. leaves out the words after उत्तरार्धे.

II. viii, 18, 16. मानेन. N.; उभयोश्च P. U. Text. उभयांश्च P. U. Com. इति om. Md.

श्राद्धेन हि तृप्तिं वेदयन्ते पितरः ॥ १८ ॥

तिष्येण पुष्टिकामः ॥ १९ ॥ १८ ॥

२. ८. १९.

गौरसर्षपाणां चूर्णानि कारयित्वा तैः पाणिपादं प्रक्षाल्य मुखं कर्णौ प्राश्य च यद्वातो नातिवाति तदासनोजिनं वस्तस्य प्रथमः कल्पो वाग्यतो दक्षिणामुखो भुञ्जीत ॥ १ ॥

अनायुष्यं त्वेवंमुखस्य भोजनं मातुरित्युपदिशन्ति ॥ २ ॥

औदुम्बरश्चमसः ॥ ३ ॥

सुवर्णनाभः ॥ ४ ॥

प्रशस्तः ॥ ५ ॥

न चान्येनापि भोक्तव्यः ॥ ६ ॥

यावद्ग्रासं संनयन् ॥ ७ ॥

अस्कन्दयन् ॥ ८ ॥

नापजिहीत ॥ ९ ॥

अपजिहीत वा ॥ १० ॥

कृत्स्नं ग्रासं ग्रसीत सहाङ्गुष्ठम् ॥ ११ ॥

---

II. viii, 18, 18. तृप्तिं हि N.; N. U. agreeing with the Hir. U. वेदयते N. U.

II. viii, 19, 1. वस्तश्च N. U.; वस्तस्य च Md. प्रास्य Md.; P. In the Com. the reading प्राश्य is explained, and P. U. notices also reading प्रास्येदिति (read प्रास्येति).

II. viii, 19. 2. एवमुखस्य P.; N.; अनायुष्यं हि N. agreeing with the Hir. S.

II. viii, 19, 3. P. U. joins this S. with the next two.

II. viii, 19, 5. प्रशास्तः Md.

II. viii, 19, 7. P. U. joins Sútras 7—11, but repeats nearly all the Sútras separately. The separation, as given by us according to P. and N. U. seems necessary on account of Sútras 9 and 10, which form a parenthesis.

II. viii, 19, 9 and 10. अपजहीत Md.; and N. the second time.

न च मुखशब्दं कुर्यात् ॥ १२ ॥

पाणिं च नावधुनुयात् ॥ १३ ॥

आचम्योर्ध्वौ पाणी धारयेदा प्रोदकीभावात् ॥ १४ ॥

ततोग्निमुपस्पृशेत् ॥ १५ ॥

दिवा च न भुञ्जीतान्यन्मूलफलेभ्यः ॥ १६ ॥

स्थालीपाकानुद्देश्यान्नानि च वर्जयेत् ॥ १७ ॥

सोत्तराच्छादनश्चैव यज्ञोपवीती भुञ्जीत ॥ १८ ॥

नैय्यमिकश्राद्धं स्नेहवदेव दद्यात् ॥ १९ ॥

सर्पिर्मांसमिति प्रथमः कल्पः ॥ २० ॥

अभावे तैलं शाकमिति ॥ २१ ॥

मघासु चाधिकं श्राद्धकल्पेन सर्पिर्ब्राह्मणान्भोजयेत् ॥ २२ ॥

॥ १९ ॥

२. ८. २०·

मासिश्राद्धे तिलानां द्रोणंद्रोणं येनोपायेन शक्नुयात्तेनोपयोजयेत् ॥ १ ॥

समुदेतांश्च भोजयेन्न चातद्गुणायोच्छिष्टं दद्युः ॥ २ ॥

---

II. viii, 19, 12. च omitted; P.; P. U.

II. viii, 19, 13. पाणि P.; °धूनुयात् N.; N. U.; Md. पाणी Md.

II. viii, 19, 14. आचम्य चोर्ध्वौ N.; N. U.; Md. sec. m.

II. viii, 19, 16. अन्यमूल N.; N. U.

II. viii, 19, 17. उद्दिश्यानि Md.; उद्देश्यानि N.; N. U. according to Hir. S. All three MSS. om. अन्नानि.

II. viii, 19, 18. स्वोत्तरा° P. sec. m.

II. viii, 19, 19. नैय्यमिकं च N. U.; नैय्यमिकं तु P. U. text; Md.

II. viii, 20, 1. द्रोणं once only N. U.; मासिश्राद्धे तिलानां repeated after उपायेन N. U. P. begins a new Sútra after उपायेन, and N. U. has a break, but the Com. for the whole follows in one piece. तेनोपायेनो° N.; P. pr. m.; P. U.

II. viii, 20, 2. समुदितांश्च N. pr. m.

उदगयन आपूर्यमाणपक्षस्यैकरात्रमवरार्ध्यमुपोष्य तिष्येण पुष्टिकामः स्थालीपाकं श्रपयित्वा महाराजमिष्ट्वा तेन सर्पिष्मता ब्राह्मणं भोजयित्वापुष्ट्यर्थेन सिद्धिं वाचयीत ॥ ३ ॥

एवमहरहरा परस्मात्तिष्यात् ॥ ४ ॥

द्वौ द्वितीये ॥ ५ ॥

त्रींस्तृतीये ॥ ६ ॥

एवं संवत्सरमभ्युच्चयेन ॥ ७ ॥

महान्तं पोषं पुष्यति ॥ ८ ॥

आदित एवोपवासः ॥ ९ ॥

आत्ततेजसां भोजनं वर्जयेत् ॥ १० ॥

भस्मतुषाधिष्ठानं पदा पादस्य प्रक्षालनमाधिष्ठानं च वर्जयेत् ॥ ११ ॥

प्रेङ्खोलनं च पादयोर्जानुनि चात्याधानं जङ्घायाः ॥ १२ ॥

नखैश्च नखवादने स्फोटनानि चाकारणात् ॥ १३ ॥

यच्चान्यत्परिचक्षते ॥ १४ ॥

योक्ता च धर्मयुक्तेषु द्रव्यपरिग्रहेषु च ॥ १५ ॥

प्रतिपादयिता च तीर्थे ॥ १६ ॥

---

II. viii, 20, 3. ब्राग्हणान् N. U.; वाचयेत् N. U. text; उपवासमुपोष्य P. sec. m. कामस्था° P.; N.

II. viii, 20, 8. पुष्यंति N.

II. viii, 20, 11. °तुषाधिष्ठानं वर्जयेदित्येके ॥ पदा पदस्य° two Sútras P. U. Text.—°तुषाधिष्ठानं वर्जयेदि P.; one Sútra.—°तुषाधिष्ठानं च वर्जयेदित्येवं पदा N. U. one Sútra.

II. viii, 20, 12. प्रेखोलं Md. P. U. makes two S., beginning the 2nd with जानुनि. अभ्याधानं P.; P. U. जंघायां Md.

II. viii, 20, 13. °वादनस्फोटनानि Md.; P. sec. m.; N. U. This reading is noticed in Com. समासपाठ एष एवार्थः । (P. U). P. U. divides the Sútra.

II. viii, 20, 16. च left out N. U.

यन्ता चातीर्थे यतो न भयं स्यात् ॥ १७ ॥
संग्रहीता च मनुष्यान् ॥ १८ ॥
भोक्ता च धर्माविप्रतिषिद्धान्भोगान् ॥ १९ ॥
एवमुभौ लोकावभिजयति ॥ २० ॥ २० ॥

॥ इत्यापस्तम्बीयधर्मसूत्रे द्वितीये प्रश्नेष्टमः पटलः समाप्तः ॥

चत्वार आश्रमा गार्हस्थ्यमाचार्यकुलं मौनं वानप्रस्थ्यमिति॥१॥
तेषु सर्वेषु यथोपदेशमव्यग्रो वर्तमानः क्षेमं गच्छति ॥ २ ॥
सर्वेषामुपनयनप्रभृति समान आचार्यकुले वासः ॥ ३ ॥
सर्वेषामनूत्सर्गो विद्यायाः ॥ ४ ॥
बुद्ध्वा कर्माणि यत्कामयेत तदारभेत ॥ ५ ॥
यथा विद्यार्थस्य नियम एतेनैवान्तमनूपसीदत आचार्यकुले शरीरन्यासो ब्रह्मचारिणः ॥ ६ ॥
अथ परिव्राजः ॥ ७ ॥
अत एव ब्रह्मचर्यवान्प्रव्रजति ॥ ८ ॥

---

II. viii, 20, 18. मनुष्याणां N.

II. ix, 21, 1. वानप्रस्थं N.; Md.

II. ix, 21, 3. समानमाचार्य॰ Md.

II. ix, 21, 4. अनूत्सर्गे P.; P. U. text; N. U. Text; N. U. places this Sútra after the following, wherein the MS. agrees with Hir. S. अनूत्सर्गइछान्दसो दीर्घः ॥ [P. U.].

II. ix, 21, 5. कामयेत् Md.

II. ix, 21, 6. अनूपसीदताचार्य॰ Md. अनुवसीदताचार्य. P. U. Text; अनुप्रयुञ्जानस्य N. U., taken from Hir. S. N. leaves out ब्रह्मचारिण:

II. ix, 21, 7. Left out by N.

II. ix, 21, 8. N. leaves out अत एव; व्रजति P.; P. U.; अत्र व्रजति Md.

तस्योपदिशन्ति ॥ ९ ॥

अनग्निरनिकेतः स्यादशर्माशरणो मुनिः ।
स्वाध्याय एवोत्सृज्यमानो वाचं ग्रामे प्राणवृत्तिं प्रतिलभ्यानिहोनमुत्रश्चरेत् ॥ १०

तस्य मुक्तमाच्छादनं विहितम् ॥ ११ ॥

सर्वतः परिमोक्षमेके ॥ १२ ॥

सत्यानृते सुखदुःखे वेदानिमं लोकममुं च परित्यज्यात्मानमन्विच्छेत् ॥ १३ ॥

बुद्धे क्षेमप्रापणम् ॥ १४ ॥

तच्छास्त्रैर्विप्रतिषिद्धम् ॥ १५ ॥

बुद्धे चेत्क्षेमप्रापणमिहैव न दुःखमुपलभेत ॥ १६ ॥

एतेन परं व्याख्यातम् ॥ १७ ॥

अथ वानप्रस्थः ॥ १८ ॥

अत एव ब्रह्मचर्यवान्प्रव्रजति ॥ १९ ॥

तस्योपदिशन्ति ॥ २० ॥

एकाग्निरनिकेतः स्यादशर्माशरणो मुनिः ।
स्वाध्याय एवोत्सृज्यमानो वाचम् ॥ २१ ॥ ॥ २१ ॥

---

II. ix, 21, 10. अनिकेत N.; Md. has first five words twice; उत्सृजमानो MSS; but see S. 21 and passim. उपलभ्य P. U.

II. ix, 21, 12. सर्वतो मोक्षम् P. U.; °मोक्षमेति Md. मोक्षमित्येके P. sec. m. according to the Hir. S.

II. ix, 21, 13. प्रियाप्रिये after °दुःखे. P.; N.; N. U.; P. U., but unexplained in the Com.

II. ix, 21, 16. P. originally उपलभ्येत, corrected into उपलक्ष्येत, and again into °भ्येत.

II. ix, 21. 19. P. U. joins this S. and 20.

II. ix, 21, 21. अनिकेतस्याद् Md.; P.; उत्सृज° N.; N. U.

## २. ९. २२.

तस्यारण्यमाच्छादनं विहितम् ॥ १ ॥

ततो मूलैः फलैः पर्णैस्तृणैरिति वर्तयंश्चरेत् ॥ २ ॥

अन्ततः प्रवृत्तानि ॥ ३ ॥

ततोपो वायुमाकाशमित्यभिनिश्रयेत् ॥ ४ ॥

तेषामुत्तरउत्तरः संयोगः फलतो विशिष्टः ॥ ५ ॥

अथ वानप्रस्थस्यैवानुपूर्व्यमेक उपदिशन्ति ॥ ६ ॥

विद्यां समाप्य दारं कृत्वाग्नीनाधाय कर्माण्यारभते सोमावरा-
ध्यानि यानि श्रूयन्ते ॥ ७ ॥

गृहान्कृत्वा सदारः सप्रजः सहाग्निभिर्बहिर्ग्रामाद्वसेत् ॥ ८ ॥

एको वा ॥ ९ ॥

शिलोञ्छेन वर्तयेत् ॥ १० ॥

न चात ऊर्ध्वं प्रतिगृह्णीयात् ॥ ११

अभिषिक्तश्च जुहुयात् ॥ १२ ॥

शनैरपोभ्यवेयादनभिघ्नन्नभिमुखमादित्यमुदकमुपस्पृशेत् ॥१३॥

इति सर्वत्रोदकस्पर्शनविधिः ॥ १४ ॥

---

II. ix, 22, 2. P. U. omits फलैः and इति.—Md. and N. om. फलैः— P. pr. m. om. वर्णैः—The reading in the Text has been selected according to the analogy of other passages.

II. ix, 22, 4. वायुराका° P.U. °त्यभोनिश्रयेत् N.

II. ix, 22, 7. दारं च Md.— आरभंते Md.— आरभेत P. U. according to the Hir. S.

II. ix, 22, 8. सप्रजाः Md.

II. ix, 22, 13. अभिघ्नन्° Md.; N. U. but Com. न ताडयेत्.—अभिमुखनादि° P. sec. m; °मुख आ° P. U.

II. ix, 22, 14. उदकोपस्पर्शन° N.; Md. agreeing with the Hir. S.

तस्य द्वंद्वं द्रव्याणामेक उपदिशन्ति पाकार्थं भोजनार्थं वासि-
परशुदात्रकाजानाम् ॥ १५ ॥

द्वंद्वानामेकैकमादायेतराणि दत्त्वारण्यमवतिष्ठेत ॥ १६ ॥

तस्यारण्येनैवात ऊर्ध्वं होमो वृत्तिः प्रतीक्षाच्छादनं च ॥१७॥

येषु कर्मसु पुरोडाशाश्चरवस्तेषु कार्याः १८ ॥

सर्वं चोपांशु सह स्वाध्यायेन ॥ १९ ॥

नारण्यमभ्याश्रावयेत् ॥ २० ॥

अग्न्यर्थं शरणम् ॥ २१ ॥

आकाशे स्वयम् ॥ २२ ॥

अनुपस्तीर्णे शय्यासने ॥ २३ ॥

नवे सस्ये प्राप्ते पुराणमनुजानीयात् ॥ २४ ॥ २२ ॥

२. ९. ३.

भूयांसं वा नियममिच्छन्नन्वहमेव पात्रेण सायं प्रातरर्थमाहरेत्
॥ १ ॥

ततो मूलैः फलैः पर्णैस्तृणैरिति वर्तयँश्चरेदन्ततः प्रवृत्तानि
ततोपो वायुमाकाशमित्यभिनिश्रयेत्।तेषामुत्तरउत्तरः संयोगः
फलतो विशिष्टः ॥ २ ॥

अथ पुराणे श्लोकावुदाहरन्ति ॥ ३ ॥

---

II. ix, 22, 15. Between 14 and 15 P. U. and N. U. give another Sútra taken from the Hir. S. क्षारलवणमधुमांसानि वर्जयेत् ॥ गतमेतत् ॥—द्वंद्व P. pr. m. द्वंद्वपात्राणा.° N. U.— एकैकपाकार्थे Md.; N. U.;— वाशी P. U.; वांच Md.; दातृ P. sec. m.

II. ix, 22, 16. अवतिष्ठेत् N. U. and om. द्वंद्वानाम् इतराणि दत्त्वा; अवतिष्ठते Md.

II. ix, 22, 17. होमवृत्ति° P.; होमावृत्ति° N. U.; च विहितम् P. U.; P. agreeing with the Hir. U.; विहितं N. U.

II. ix, 22, 18. ते कार्याः P. U.; N. U.; N.; P. sec. m.

II. ix, 23, 1. एवं N. U.

II. ix, 23, 2. पत्रैः for पर्णैः P. U. according to the Hir. S.

II. ix, 23, 3. P. U. and N. U. do not separate this Sútra from the following.

अष्टाशीतिसहस्राणि ये प्रजामीषिर ऋषयः ।
दक्षिणेनार्यम्णः पन्थानं ते श्मशानानि भेजिरे ॥ ४ ॥
अष्टाशीतिसहस्राणि ये प्रजां नेषिर ऋषयः ।
उत्तरेणार्यम्णः पन्थानं तेमृतत्वँ हि कल्पते ॥ ५ ॥

इत्यूर्ध्वरेतसां प्रशँसा । अथापि संकल्पसिद्धयो भवन्ति ॥ ६ ॥

यथा वर्षं प्रजादानं दूरे दर्शनं मनोजवता यच्चान्यदेवंयुक्तम् ॥ ७ ॥

तस्माच्छ्रुतितः प्रत्यक्षफलत्वाच्च विशिष्टानाश्रमानेतानेके ब्रुवते ॥ ८ ॥

त्रैविद्यवृद्धानां तु वेदाः प्रमाणमिति निष्ठा । तत्र यानि श्रूयन्ते व्रीहियवपश्वाज्यपयःकपालपत्नीसंबन्धान्युच्चैर्नीचैः कार्यमिति तैर्विरुद्ध आचारोप्रमाणमिति मन्यन्ते ॥ ९ ॥

यत्तु श्मशानमुच्यते नानाकर्मणामेषोन्ते पुरुषसँस्कारो विधीयते ॥ १० ॥

ततः परमनन्त्यं फलँ स्वर्ग्यशब्दँ श्रूयते ॥ ११ ॥ 23 ॥

---

II. ix, 23, 4. ईषिरर्षयः N. U.; P. U.; N.; दक्षिना N.

II. ix, 23, 5. नेषिरर्षयः N. U.; P. U.; N. Regarding कल्पते see the Com.

II. ix, 23, 8. एतान् om. P. U.; फलवत्त्वा° P. pr. m.; P. U.

II. ix, 23, 9. निष्ठास्तत्र Md.; विरुद्ध आचारो वेदाः प्रमाणम् Md. आचारः प्रमाणम् N. U. text.—आचाराप्रमा° N.; आचारो न P. sec. m. according to the Hir. S.

II. ix, 23, 10. श्मशानं श्रूयते P. U.

II. ix, 23, 11. स्वर्ग° P. U. Text; P.; N.; Md. but see the Com.

२. ९. २४.

अथाप्यस्य प्रजातिममृतमाम्नाय आह । प्रजामनु प्रजायसे तदु ते मर्त्यामृतमिति ॥ १ ॥

अथापि स एवायं विरूढः पृथक्प्रत्यक्षेणोपलभ्यते दृश्यते चापि सारूप्यम् । देहत्वमेवान्यत् ॥ २ ॥

ते शिष्टेषु कर्मसु वर्तमानाः पूर्वेषाँ सांपरायेण कीर्तिँ स्वर्गं च वर्धयन्ति ॥ ३ ॥

एवमवरोवरः परेषाम् ॥ ४ ॥

आ भूतसंप्लवात्ते स्वर्गजीविनः ॥ ५ ॥

पुनः स्वर्गे बीजार्था भवन्तीति भविष्यत्पुराणे ॥ ६ ॥

अथापि प्रजापतेर्वचनम् ॥ ७ ॥

त्रयीं विद्यां ब्रह्मचर्यं प्रजातिँ श्रद्धां तपो यज्ञमनुप्रदानम् ।
य एतानि कुर्वते तैरित्सह स्मो रजो भूत्वा ध्वँसतेन्यत्प्रशँसन्निति ॥ ८ ॥

तत्र ये पापकृतस्त एव ध्वँसन्ति ॥ ९ ॥

यथा पर्णं वनस्पतेः ॥ १० ॥

---

II. ix, 24, 1. P. U. begins a new Sútra with प्रजामनु.

II. ix, 24, 2. चातिसारूप्यं . . . अन्यत्तु N. U.

II. ix, 24, 3. Sútra itself om. N. U.; सुवर्गे N.; तेषु कर्मसु Md.; P. U. joins this and the next three Sútras.

II. ix, 24, 4. अपरोपरः P. pr. m.; अवरोपर : Md.

II. ix, 24, 5. स्वर्गजितः P. U.; N. U. P. according to the Hir. S.

II. ix, 24, 7. P. U. joins this and the following Sútra.

II. ix, 24, 8. त्रयोविद्यां P. U.; N.; त्रयोवि° N. U.

II. ix, 24, 9. पापकृतः स्ते° P.

II. ix, 24, 10. Md., N. add न परान्हिंसन्ति; N. U. Text न परान्हिनस्ति; the former two agreeing with the Hir. S.

नास्यास्मिँल्लोके कर्मभिः संबन्धो विद्यते तथा परस्मिन्कर्मफलैः ॥ ११ ॥

तदेतेन वेदितव्यम् ॥ १२ ॥

प्रजापतेर्ऋषीणामिति सर्गोयम् ॥ १३ ॥

तत्र ये पुण्यकृतस्तेषां प्रकृतयः परा ज्वलन्त्य उपलभ्यन्ते ॥ १४ ॥

स्यात्तु कर्मावयवेन तपसा वा कश्चित्सशरीरोन्तवन्तं लोकं जयति संकल्पसिद्धिश्च स्यान्न तु तज्ज्यैष्ठ्यमाश्रमाणाम् ॥१५॥
॥ २४ ॥

॥ इत्यापस्तम्बीयधर्मसूत्रे द्वितीये प्रश्ने नवमः पटलः समाप्तः ॥

व्याख्याताः सर्ववर्णानां साधारणवैशेषिका धर्माः। राज्ञस्तु विशेषाद्वक्ष्यामः ॥ १ ॥

दक्षिणाद्वारं वेश्म पुरं च मापयेत् ॥ २ ॥

अन्तरस्यां पुरि वेश्म ॥ ३ ॥

तस्य पुरस्तादावसथस्तदामन्त्रणमित्याचक्षते ॥ ४ ॥

दक्षिणेन पुरं सभा दक्षिणोदग्द्वारा यथोभयं संदृश्येत बहिरन्तरं चेति ॥ ५ ॥

---

II. ix, 24, 11. परस्मिन्लोके P. U.

II. ix, 24, 12. N. U. and P. join S. 12, 13, and 14, up to पुण्यकृतः We according to P. U.

II. ix, 24, 15. शरीरेण रातवंतं . . . . जयेदभिस्वर्गं लोकं जयतीति . . . . ज्येष्ठम्, N. U. जयतीति P. U.; तद् om. P. pr. m., P. U.

II. x, 25, 1. धर्मा om. P. साधारणा N. U.

II. x, 25, 4. P. U. begins a new Sútra with तदा॰.

II. x, 25, 5. संदृश्यते P. sec. m.

सर्वेष्वेवाजस्रा अग्नयः स्युः ॥ ६ ॥

अग्निपूजा च नित्या यथा गृहमेधे ॥ ७ ॥

आवसथे श्रोत्रियावरार्ध्यानतिथीन्वासयेत् ॥ ८ ॥

तेषां यथागुणमावसथाः शय्यान्नपानं च विदेयम् ॥ ९ ॥

गुरूनमात्यांश्च नातिजीवेत् ॥ १० ॥

न चास्य विषये क्षुधा रोगेण हिमातपाभ्यां वावसीदेदभावाद्बुद्धिपूर्वं वा कश्चित् ॥ ११ ॥

सभाया मध्येऽधिदेवनमुद्धृत्यावोक्ष्याक्षान्निवपेद्युग्मान्वैभीतकान्यथार्थान् ॥ १२ ॥

आर्याः शुचयः सत्यशीला दीवितारः स्युः ॥ १३ ॥

आयुधग्रहणं नृत्तगीतवादित्राणीति राजाधीनेभ्योऽन्यत्र न विद्येरन् ॥ १४ ॥

क्षेमकृद्राजा यस्य विषये ग्रामेऽरण्ये वा तस्करभयं न विद्यते ॥ १५ ॥ २५ ॥

---

I. x, 25, 7. गृहमेधि N.

I. x, 25, 8. After S. 8 P. U.; N. U.; and P. pr. m. have another Sútra तेषां पूजा श्रेयस्यात्मनः कुर्यात् (कार्या वा N. U.) which seems to have been taken from the Hir. S. Compare also II. iii, 7, 12.

II. x, 25, 9. तेभ्यो N. U., from the Hir. S. शय्या अन्न° P.; N.; N. U. देयं N. U.; N.; P. U. Text.

II. x, 25, 11. P. U. begins a new Sútra with अभावाद°.

II. x, 25, 12. सभायां P.; N.; P. U.—उद्धृत्य P. U.; N. U.—निर्वपेन् N. U.

II. x, 25, 13. देवितारः P. U.

II. x, 25, 14. नृत्य P.; N. U.; P. U. आयुधग्रहण° Md.

## २. १०. २६.

भृत्यानामनुपरोधेन क्षेत्रं वित्तं च दद्न्ब्राह्मणेभ्यो यथार्हमनन्ताँ-
ल्लोकानभिजयति ॥ १ ॥

ब्राह्मणस्वान्यपजिगीषमाणो राजा यो हन्यते तमाहुरात्मयूपो
यज्ञोनन्तदक्षिण इति ॥ २ ॥

एतेनान्ये शूरा व्याख्याताः प्रयोजने युध्यमानास्तनुत्यजः ॥ ३ ॥

ग्रामेषु नगरेषु चार्याञ्छुचीन्सत्यशीलान्प्रजागुप्तये विदध्यात्॥४॥

तेषां पुरुषास्तथागुणा एव स्युः ॥ ५ ॥

सर्वतो योजनं नगरं तस्करेभ्यो रक्ष्यम् ॥ ६ ॥

क्रोशो ग्रामेभ्यः ॥ ७ ॥

तत्र यन्मुष्यते तैस्तत्प्रतिदाप्यम् ॥ ८ ॥

धार्म्यँ शुल्कमवहारयेत् ॥ ९ ॥

अकरः श्रोत्रियः ॥ १० ॥

सर्ववर्णानां च स्त्रियः ॥ ११ ॥

कुमाराश्च प्राग्व्यञ्जनेभ्यः ॥ १२ ॥

ये च विद्यार्था वसन्ति ॥ १३ ॥

तपस्विनश्च ये धर्मपराः ॥ १४ ॥

---

II. x, 26, 1. अनुरोधेन N. U.; ददान् N. U. दद्यात् P.sec. m. यथार्थं Md.

II. x, 26, 2. उपजिगीषमाणः N.; P. sec. m. अपजिहीर्षमाणः N. U. P. U. according to the Hir. S.

II. x, 26, 3. नियमा Md., mistake caused by I. i, 4, 7. शूद्रा P. pr. m.

II. x, 26, 4. आर्यादीन् N. U. धर्मार्थकुशलान्प्रजा° added by P.; P. U.; N. U. according to the Hir. S.

II. x, 26, 6. रक्षन् Md.; N. U.

II. x, 26, 8. यैर्मु° P. U.—मुच्यते P. sec. m. प्रतिदातव्यं Md.

II. x, 26, 9. अपहारयेत् P. sec. m.

II. x, 26, 13. वसन्तीति Md.

शूद्रश्च पादावनेक्ता ॥ १५ ॥

अन्धमूकबधिररोगाविष्टाश्च ॥ १६ ॥

ये व्यर्था द्रव्यपरिग्रहैः ॥ १७ ॥

अबुद्धिपूर्वमलंकृतो युवा परदारमनुप्रविशन्कुमारीं वा वाचा बाध्यः ॥ १८ ॥

बुद्धिपूर्वं तु दुष्टभावो दण्ड्यः ॥ १९ ॥

संनिपाते वृत्ते शिश्नच्छेदनं सवृषणस्य ॥ २० ॥

कुमार्यां तु स्वान्यादाय नाश्यः ॥ २१ ॥

अथ भृत्ये राज्ञा ॥ २२ ॥

रक्ष्ये चात ऊर्ध्वं मैथुनात् ॥ २३ ॥

निर्वेशाभ्युपाये तु स्वामिभ्योवसृजेत् ॥ २४ ॥ २६ ॥

२. १०. २७.

चरिते यथापुरं धर्माद्धि संबन्धः ॥ १ ॥

सगोत्रस्थानीयां न परेभ्यः समाचक्षीत ॥ २ ॥

कुलाय हि स्त्री प्रदीयत इत्युपदिशन्ति ॥ ३ ॥

तदिन्द्रियदौर्बल्याद्विप्रतिपन्नम् ॥ ४ ॥

अविशिष्टं हि परत्वं पाणेः ॥ ५ ॥

---

II. x, 26, 15. शूद्राश्च Md. शूद्रस्य P. sec. m.

II. x, 26, 16. मूढ P. sec. m.; N. °बधिरमूक° P. U.

II. x, 26, 17. वृथा P. U. instead of व्यर्था; and explained by व्यर्था निष्प्रयोजनाः. But N. U. व्यर्था निष्प्रयोजनाः only.

II. x, 26, 18. °पूर्वकं P. U. कुमारी वा N. U.; N.; पतिंवरां Md., apparently from the Com. वाच्यः P. U.

II. x, 26, 22. राज्ञा भृत्ये N. U.; P. U.; P. pr. m.

II. x, 26, 24. अभ्युपगमे N. U.; °भ्यस्तेवसृजेत् P. U.

II. x, 27, 3. P. adds sec. m. सगोत्रायैव तु समाचक्षीत देवराय तदभावे सपिण्डेभ्यः। apparently from the Com.

II. x, 27, 5. अवशिष्टम Md.; N. U.; the Com. marks it as a faulty reading; हि om. N.

तद्व्यतिक्रमे खलु पुनरुभयोर्नरकः ॥ ६ ।

नियमारम्भणो हि वर्षीयानभ्युदय एवमारम्भणादपत्यात् ॥ ७ ॥

नाश्य आर्यः शूद्रायाम् ॥ ८ ॥

वध्यः शूद्र आर्यायाम् ॥ ९ ॥

दारं चास्य कर्शयेत् ॥ १० ॥

सवर्णायामन्यपूर्वायाँ सकृत्संनिपाते पादः पततीत्युपदिशन्ति।११।

एवमभ्यासे पादःपादः ॥ १२ ॥

चतुर्थे सर्वम् ॥ १३ ॥

जिव्हाच्छेदनं शूद्रस्यार्यं धार्मिकमाक्रोशतः ॥ १४ ॥

वाचि पथि शय्यायामासन इति समीभवतो दण्डताडनम् ॥१५॥

पुरुषवधे स्तेये भूम्यादान इति स्वान्यादाय वध्यः ॥ १६ ॥

चक्षुनिरोधस्त्वेतेषु ब्राह्मणस्य ॥ १७ ॥

नियमातिक्रमणमन्यं वा रहसि बन्धयेदा समापत्तेः ॥ १८ ॥

---

II. x, 27, 6. खलु om. N. U.

II. x, 27, 7. अपात्यात् Md.; N. U.; mentioned in the Com.; आपत्यात् N.

II. x, 27, 8. आचार्यः Md.

II. x, 27, 10. कर्षयेत् N..U.; P. U.; P. pr. m.

II. x, 27, 11. N. U. has after पतति |; उपदिशन्तीत्युपदिशन्ति॥ उप,दशन्ति प्रायश्चित्तमेव कर्तव्यं पुनरुक्तेश्चादरः सूचितः ||;—P. begins a fresh S. after पतति || N. om. इत्युपदिशन्ति ||.

II. x, 27, 15. आसने शयने वेति P. U.; पदे Md.; चेति N. U.; P. pr. m.

II. x, 27, 16. परदारानुप्रवेश इति N.; also N. U. in the Com. taken from the Hir. S.

II. x, 27, 17. चक्षुर्निरोध° N.; Md.; P. U. sec. m.; N. U.; Haradatta: चक्षुनिरोध इति रेफलोपश्छान्दसः [ P. U. ]. [ इति क्वचित्पाठे N. U.].

II. x, 27, 18. अतिक्रमिणम् N.; N. U. and in P. U. Com.; बोधयेत् N.; समाप्तेः P.; P. U.—P. U. makes a new S. of आ समाप्तेः |

असमापत्तौ नाश्यः ॥ १९ ॥

आचार्य ऋत्विक्स्नातको राजेति त्राणं स्युरन्यत्र वध्यात् ॥ २० ॥ २७ ॥

॥ इत्यापस्तम्बीयधर्मसूत्रे द्वितीये प्रश्ने दशमः पटलः समाप्तः ॥

२. ११. २८.

क्षेत्रं परिगृह्योत्थानाभावात्फलाभावे यः समृद्धः स भावि तदपहार्यः ॥ १ ॥

अवशिनः कीनाशस्य कर्मन्यासे दण्डताडनम् ॥ २ ॥

तथा पशुपस्य ॥ ३ ॥

अवरोधनं चास्य पशूनाम् ॥ ४ ॥

हित्वा व्रजमादिनः कर्शयेत्पशून्नातिपातयेत् ॥ ५ ॥

अवरुध्य पशून्मारणे नाशने वा स्वामिभ्योवसृजेत् ॥ ६ ॥

प्रमादादरण्ये पशूनुत्सृष्टान्दृष्ट्वा ग्राममानीय स्वामिभ्योवसृजेत् ॥ ७ ॥

पुनः प्रमादे सकृदवरुध्य ॥ ८ ॥

तत ऊर्ध्वं न सूर्क्षेत् ॥ ९ ॥

परपरिग्रहमविद्वानाददान एधोदके मूले पुष्पे फले गन्धे ग्रासे शाक इति वाचा बाध्यः ॥ १० ॥

---

II. x, 27, 19. असमाप्तौ P.; P. U.; N. U. om. this S., but has the Com.

II. xi, 28, 4. अपरोधनं N.; Md.

II. xi, 28, 5. कर्शयेन्नातीव ताडयेत् । Md.; पशून्नातिवापयेत् N. U. Text and Com. accordingly. आशिनः N.

II. xi, 28, 6. विसृजेत् Md.

II. xi, 28, 7. सृष्टान् Md. विसृजेत् Md.

II. xi, 28, 9. ततः परम् Md.

II. xi, 28, 10. गन्धे om. N.

विदुषो वाससः परिमोषणम् ॥ ११ ॥
अदण्ड्यः कामकृते तथा प्राणसँशये भोजनमाददानः ॥१२॥
प्राप्तनिमित्ते दण्डाकर्मणि राजानमेनः स्पृशति ॥ १३ ॥ २८॥

२. ११. २९.

प्रयोजयिता मन्ता कर्तेति स्वर्गनरकफलेषु कर्मसु भागिनः ॥ १ ॥
यो भूय आरभते तस्मिन्फलविशेषः ॥ २ ॥
कुटुम्बिनौ धनस्येशाते ॥ ३ ॥
तयोरनुमतेन्योपि तद्धितेषु वर्तेरन् ॥ ४ ॥
विवादे विद्याभिजनसंपन्ना वृद्धा मेधाविनो धर्मेष्वविनिपातिनः ॥ ५ ॥
संदेहे लिङ्गतो दैवेनेति विचित्य ॥ ६ ॥
पुण्याहे प्रातरग्नाविद्धेपामन्ते राजवत्युभयतः समाख्याप्य सर्वानुमते मुख्यः सत्यं प्रश्नं ब्रूयात् ॥ ७ ॥
अनृते राजा दण्डं प्रणयेत् ॥ ८ ॥
नरकश्चात्राधिकः सांपराये ॥ ९ ॥
सत्ये स्वर्गः सर्वभूतप्रशँसा च ॥ १० ॥
सा निष्ठा याविद्या स्त्रीषु शूद्रेषु च ॥ ११ ॥
आथर्वणस्य वेदस्य शेष इत्युपदिशन्ति ॥ १२ ॥

---

II. xi, 28, 11. परीमोषणम् Md.; °मोक्षणम् P. U.; P. pr. m.
II. xi, 29, 1. अनुमन्ता N. U.; from the Commentary; च कर्मसु Md.
II. xi, 29, 4. च inserted after हितेषु. P. sec. m.
II. xi, 29, 6. विचिन्त्य N. U.—P. U. adds ते च निर्णयन्तः ॥
II. xi, 29, 7. समख्याप्य: P. sec. m., Md. समाख्याय N. U.

कृच्छ्रा धर्मसमाप्तिः समाम्नातेन । लक्षणकर्मणात्तु समाप्यते ॥ १३ ॥

तत्र लक्षणम् । सर्वजनपदेष्वेकान्तसमाहितमार्याणां वृत्तँ सम्यग्विनीतानां वृद्धानामात्मवतामलोलुपानामदाम्भिकानां वृत्तसादृश्यं भजेत । एवमुभौ लोकावभिजयति ॥ १४ ॥

स्त्रीभ्यः सर्ववर्णेभ्यश्च धर्मशेषान्प्रतीयादित्येक इत्येके ॥ १५ ॥

॥ २९ ॥

इत्यापस्तम्बीयधर्मसूत्रे द्वितीये प्रश्न एकादशः पटलः समाप्तः ॥

॥ इति द्वितीयः प्रश्नः समाप्तः ॥

॥ समाप्तं चेदमापस्तम्बीयधर्मसूत्रम् ॥

---

II. xi, 29, 13. समाम्नानेन N. U.; N.; P. sec. m. कर्मणा तु N. U.; N.; P. U.; but the Com. कर्मणात्त्विति द्वितकारपाठश्छान्दसः । आदिति वा निपातस्य प्रश्लेषः ।

II. xi, 29, 14. वृत्तं स्वधर्मनिरतानां P. U.; N. U.; P. pr. m. according to the Hir. S.

# INDEX OF THE SUTRAS.

### ओ



### औ



### क